# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अनुमन्यते - | Agrees |
| अराजकता - | Anarchy |
| आरक्षकः - | Police |
| आवेदनपत्रम् - | Application |
| आशीः - | Blessing |
| आशंसितवान् - | Wished |
| उपायनम् - | Gift |
| उर्वारुकम् - | Cucumber |
| कूपी - | Bottle |
| क्रौञ्चपक्षी - | A type of bird |
| क्षेत्रम् - | Farm |
| चितः - | Elected |
| जानपदम् - | Folklore |
| जामाता - | Son-in-law |
| झटिति - | Soon |
| तिमिङ्गिलः - | Whale |
| दृढकायः - | Well-built |
| नक्षत्रम् - | Star |
| निर्वाचनम् - | Election |
| नैपुण्यम् - | Expertise |
| पक्षः - | Wing |
| पूर्वाग्रहः - | Preconceived opinion |
| पेटिका - | Box |
| प्रबुद्धः - | Woke up |
| प्रशंसा - | Praise |
| बकः - | Crane |
| भञ्जनम् - | Breaking |
| मत्तः - | From me |
| युगलम् - | Couple |
| लेखनफलकम् - | Slate |
| वर्णचित्रम् - | Colour picture |
| विद्यमाना - | Existing |
| विहितवान् - | Sentenced |
| वेदान्ती - | Philosopher |
| वैवाहिकजीवनम् - | Married life |
| व्यादाय - | Having opened |
| श्वश्रूः - | Mother-in-law |
| साक्षरः - | Literate |
| सुगन्धतैलम् - | Perfumed oil |
| स्यूतः - | Bag |

चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'




## अमेरिकादेशेऽपि अनक्षरज्ञत्वम् अधिकप्रमाणेन!

महात्मा गान्धी यदा तरुणः आसीत् तदा ब्यारिष्टर्पदवीं प्राप्य दक्षिणाफ्रिकादेशे वृत्तिनिरतः आसीत्, न तु भारते। एवम् एव बहवः भारतीयाः विदेशे विद्याभ्यासं कृतवन्तः, तेषु केचन भारतात् बहिः (तत्रैव) उद्योगनिरताः जाताः च। एषा एव प्रवृत्तिः इदानीम् अपि अनुवर्तमाना दृश्यते, किञ्चिद्भिन्नतया। बहवः भारते उन्नतविद्याभ्यासं कुर्वन्ति, किन्तु उद्योगम् अन्विष्यन्तः विदेशं गच्छन्ति। एषा प्रवृत्तिः 'प्रतिभापलायनम्' इति शब्देन निर्दिश्यते, या च गभीरचर्चास्पदम् अस्ति। एतद्विषये चिन्तयद्भिः एवम् उच्यते यत् केनापि उपायेन एतत् 'पलायनं' स्थगयामः चेत् 'प्रतिभा' भारते एव तिष्ठन्ती देशाभिवृद्धिकार्ये उपयुक्ता भवेत् इति।

यम् अमेरिकादेशं जनाः समृद्धं प्रगतिं गतं च भावयन्ति तस्य विषये एषु दिनेषु दिग्भ्रमजनकाः केचन तथ्यांशाः प्राकाश्यं गताः सन्ति। एवं हि श्रूयते– तत्र प्राप्तवयस्केषु अर्धांशजनानां पठन-लेखनकौशलयोः परिमितं ज्ञानम् इति, गणिते तु शून्याङ्कमितं ज्ञानम् इति, योग्यवृत्तेः प्राप्तौ ते कष्टम् अनुभवन्तः सन्ति इति च।

शिक्षाविभागतः कृतात् सर्वेक्षणात् ज्ञायते यत् अमेरिकादेशे १,१०,००,००० सङ्ख्याकेषु तरुणेषु १,००,००,००० जनाः पञ्चस्तरात्मकस्य वृत्तिनैपुण्यस्य द्वितीये स्तरे सन्ति इति, तेषु ५० दशलक्षजनाः शोचनीयावस्थायां सन्ति, ये च आवेदनपत्रस्य पूरणे अपि असमर्थाः इति च।

अचिरात् एव अमेरिकादेशस्य अर्धांशादधिकजनाः अनक्षरज्ञगणीयत्वेन परिगणिताः भवेयुः। तदा भारतीयाः अन्ये एशियादेशीयाः च अमेरिकीयैः महाबुद्धिमत्वेन परिगण्येरन्, 'विशेषसौलभ्यं परिकल्पते भवद्भ्यः, अत्रैव तिष्ठन्तु भवन्तः' इति प्रार्थ्येरन् अपि।

एषु दिनेषु भारते ग्रामात्, नगरात्, उपमण्डलात्, राज्यात् च अनक्षरज्ञताम् अपसारयितुं विशेषप्रयत्नाः क्रियमाणाः सन्ति। वयस्कशिक्षणसमितिः घोषयति– 'एकैकोऽपि शिक्षयेत् अन्यम्' इति। एषा योजना अत्र साफल्यम् अवाप्नुवती अस्ति अपि।

किमर्थम् अमेरिकादेशः एतद्विषये भारतात् किञ्चित् न शिक्षेत?

सम्पुटः–१० नवेम्बर्–१९९३ सञ्चिका–८

प्रतिकृतिमूल्यं रू. ४-०० * वार्षिकं ग्राहकशुल्कं रू. ४८-००



# वैवाहिकजीवनं कथम् अस्ति?

| | |
|---|---|
| सुमती – अये नन्दिनि! आगच्छतु, उपविशतु। चिरात् दर्शनं भवत्याः। कुशलिनी खलु भवती? | Oh, Nandini! Come in, sit down. Seeing you after a long time. You are fine, are you? |
| नन्दिनी –आम्। भवती अपि कुशलिनी खलु? | Yes. You are also doing well? |
| सु – आम्। नूतनं वैवाहिकजीवनं कथम् अस्ति? | I am. By the way how is your newly married life? |
| न – सर्वं सम्यक् अस्ति। पतिगृहे सर्वे अनुकूलाः। | It is nice. People in my husband's house are all good. |
| सु – इदानीम् अपि भवती उद्योगं कुर्वती अस्ति वा? | Are you still working? |
| न – न। उद्योगार्थं गमनं मम पतिः न इच्छति। उद्योगः करणीयः एव इति ममापि आग्रहः नास्ति। | No. My husband doesn't like my going for work. I do not also feel that I must be employed. |
| सु – तर्हि गृहे समययापनं क्लेशाय न भवति वा? | Don't you find it difficult to spend time at home? |
| न – न खलु? प्रतिदिनं कांश्चन बालान् संस्कृतं पाठयामि। मध्याह्ने काश्चन महिलाः सम्भाषणाभ्यासार्थम् आगमिष्यन्ति। .... | Not at all! I teach Sanskrit to some children every day. In the after-noons some ladies come for practising conversation in Sanskrit. |
| सु – आदिनं तर्हि भवत्याः कार्यं भवति एव। | You have enough work then for the whole day! |
| न – वस्तुतः तु समययापनं कथम् इति मम समस्या न। समयः अपर्याप्तः भवति इति समस्या। | Really speaking, my problem is not how to spend time. I am short of it, that is my problem. |

वार्ताविशेषः–

# क्यूबादेशस्य परिस्थितिः

क्यूबादेशे प्रवृत्तस्य राजकीयविप्लवस्य अनन्तरं ४० वर्षाणि अतीतानि। गते जुलैमासस्य २६ तमे दिनाङ्के चत्वारिंशत्तमं वर्षं पूर्णतां प्राप्नोत्। किन्तु देशे या आर्थिकमन्दता उत्पन्ना तस्याः कारणतः गतवर्षे इव एतस्मिन् वर्षे स्मारकोत्सवाः सवैभवं न आचरिताः।

चत्वारिंशद्वर्षेभ्यः पूर्वं कम्यूनिष्ट्सिद्धान्तैः प्रभावितः फीडल् कास्ट्रो रुज्नामकः न्यायवादी समानविचारैः अन्यैः सह मिलित्वा शाण्टियागो-सैनिककेन्द्राणाम् उपरि आक्रमणं कृतवान्। सर्वाधिकारिणः पुलगेन्सियो बाटिस्पावर्यस्य निरङ्कुशशासनस्य निवारणार्थं प्रवृत्तस्य एतस्य प्रयत्नस्य कारणतः बहवः वीराः प्राणैः वियुक्ताः अभवन्। कास्प्रोवर्यः बन्दी जातः कारागारे स्थापितः च। वर्षत्रयानन्तरं कारागारात् मुक्तः सः पुनरपि राजविरोधिविप्लवार्थं प्रयत्नं कृत्वा पुनरपि असफलः जातः। १९५९ तमे वर्षे जनवरीमासे प्रथमे दिनाङ्के यः तृतीयः प्रयत्नः कृतः तत्र तेन विजयः प्राप्तः। पराजितः सर्वाधिकारी बारिस्पा सजीवं देशात् निर्गत्य पलायितवान्।



कास्प्रो हवानाराज्ये समाजवादिशासनस्य अङ्कुरारोपणं कृतवान्। एतेन प्रतिवेशी प्रबलः अमेरिकादेशः नितरां कुपितः, यश्च परोक्षतया क्यूबादेशस्य उपरि स्वाधिकारं स्थापितवान् आसीत्। १९६० तमे वर्षे प्रधानमन्त्रिणा कास्प्रोवर्येण स्वदेशे स्थिताः अमेरिकीयाः वाणिज्यसंस्थाः बलात् वशीकृताः, नष्टपरिहारधनं किमपि न दत्तं च। एतेन नितरां क्रुद्धः अमेरिकादेशः क्यूबासम्बद्धं राजदौत्यसम्बन्धम् अपाकृत्य तं देशं वशीकर्तुं वर्षत्रयं यावत् प्रयत्नम् अकरोत्। किन्तु तदीयः एषः प्रयत्नः सफलः न जातः।

अनन्तरं कास्प्रोवर्यः उद्घोषितवान् यत् क्यूबादेशः साम्यवादसिद्धान्तानुगुणं नीतिं निरूपयति इति। एतदनुगुणं तेन आर्थिकाभिवृद्धिनीतिः प्रकटिता। स्वदेशस्य अद्वितीयस्य प्रबलराजकीयपक्षस्य नाम 'कम्यूनिष्ट्पक्षः' इत्येव कृतवान् सः। १९७६ तमे वर्षे सः अध्यक्षपदम् अलङ्कृतवान्। १९७९ तमे वर्षे अपि अध्यक्षत्वं प्राप्तवान् सः १९८२ तमवर्षान्त्यं यावत् तत् पदं सम्यक् निरूढवान्।

क्रिस्टफर् कोलम्बस् यदा अमेरिकादेशे पदं स्थापितवान् (१४९२) तदा एव क्यूबादेशे अपि पदं स्थापितवान् इति श्रूयते। ततः आरभ्य क्यूबादेशः स्पेन्देशस्य अधीनः जातः। १८९८ तमे वर्षे अमेरिका-स्पेनदेशयोः युद्धं प्रवृत्तम्। क्यूबादेशः अमेरिकाधीनः जातः। ततः त्रयाणां वर्षाणाम् अनन्तरं– तन्नाम १९०२ तमे वर्षे – क्यूबा स्वातन्त्र्यं प्राप्नोत्। तथापि क्यूबादेशस्य विदेशीयनीतिम् अमेरिकादेशः एव निर्णयति स्म। १९३३ तमे वर्षे सर्वाधिकारी बाटिस्पावर्यः अधिकारसूत्रं गृहीतवान्। १९५९ तमवर्षान्तं यावत् तस्य निरङ्कुशशासनम् अनुवृत्तम्। मध्ये १९४४ तः १९५२ तमवर्षं यावत् अन्यशासनम् आसीत् तत्र।




कास्प्रोवर्यः यदा अधिकारसूत्रं गृहीतवान् ततः आरभ्य (१९५९ वर्षतः आरभ्य) क्यूबादेशं सोवियत्सङ्घः प्रोत्साहयति स्म। ऐरोप्यदेशाणां सहकारः अपि प्राप्तः आसीत् क्यूबादेशेन। किन्तु एषु दिनेषु सोवियत्सङ्घस्य विच्छेदः यदा जातः तदा क्यूबादेशेन आर्थिकक्षोभः प्राप्तः। 'लाटिन् अमेरिकन् फेडरेषन्'-नामिकायाः संस्थायाः सदस्याः क्यूबादेशस्य हितैषिणः च कोलम्बिया-देशः, अर्जेण्टैनादेशः इत्यादयः क्यूबादेशं बोधितवन्तः यत् अमेरिकादेशस्य दूतसम्बन्धः पुनः आरम्भणीयः, येन च अमेरिकादेशेन आरोपिताः निर्बन्धाः अपगताः स्युः इति। किन्तु कास्प्रोवर्यः उक्तवान् यत् एषः प्रस्तावः अमेरिकादेशेन स्वयं क्रियते चेत् मया अङ्गीक्रियते, किन्तु समाजवादि-सिद्धान्तानुसरणं तु न परित्यज्यते इति।

वर्षस्यास्य फेब्रवरीमासे राष्ट्रियसभार्थं(नेषनल् असेम्ब्ली) प्रवृत्ते निर्वाचने कास्प्रोपक्षेण ९९% स्थानानि प्राप्तानि। एतत्सन्दर्भे ६६ वर्षीयः कास्प्रो एवम् उक्तवान्– "पुनः पञ्चानाम् वर्षाणाम् अनन्तरम् अपि जनाः 'अहम् एव अभ्यर्थी स्याम्' इति अपेक्षां न प्रकटयेयुः इति भावयामि" इति।

कम्युनिष्ट्सिद्धान्तानुगुणं कार्यं कुर्वत्सु देशेषु चैनावियत्नां-प्रभृतिषु क्यूबादेशः अपि अन्यतमः। अतः क्यूबादेशस्य साहाय्यार्थं वियत्नादेशीयैः तण्डुलाः प्रेषिताः। इदानीं ५०,००,००० लेखनफलकानि लेखनीः च प्रेषयितुम् इच्छन्तः ते तेषां सङ्ग्रहे निरताः सन्ति।



# शाश्वतं ज्ञानम्

अनङ्गसेननामकः राजा पूर्वं प्लवङ्गदेशं पालयति स्म। तस्य अग्रजः लवङ्गसेनः। लवङ्गसेनस्य राज्याकांक्षा नास्ति। अतः सः बाल्ये एव मातापित्रोः अनुमतिं स्वीकृत्य ज्ञानं सम्पादयितुम् इच्छन् अरण्यं गतवान् आसीत्। अरण्ये शान्तमुनेः आश्रमे स्थितवान् आसीत्।

कानिचन वर्षाणि अतीतानि। अनङ्गसेनः अकस्मात् दिवङ्गतः। तदा अनङ्गसेनस्य मन्त्रिषु ज्येष्ठः सुबुद्धिनामकः अरण्यं गत्वा लवङ्गसेनं प्रार्थितवान्– "प्रभो! राजा अनङ्गसेनः दिवङ्गतः। तस्य पुत्रः तु इतोऽपि बालः। दशवर्षाणाम् अनन्तरम् एव सः युवराजपदवीं प्राप्तुम् अर्हति। अतः भवता आगन्तव्यम्। राज्यपालनं च करणीयम्। नो चेत् शात्रवः अस्माकं राज्यस्य उपरि आक्रमणं कुर्युः" इति।

तदा लवङ्गसेनः उक्तवान्– "मम राज्याकांक्षा नास्ति। राज्यपालने अहं समर्थः अपि न। एवं स्थिते अपि यदि अहं राज्यं प्रति आगमिष्यामि, तर्हि अनुजस्य पत्न्याः इन्दुमत्याः खेदः भवेत्। मम आगमनेन तस्याः पुत्रस्य युवराजपदवी न लभ्यते इति कारणतः सा अन्यथा चिन्तयेत् अपि" इति।

"एवं तर्हि महाराज्ञी इन्दुमती एव स्वयम् अत्र आगमिष्यति भवतः आह्वानार्थम्" इति उक्त्वा सुबुद्धिः ततः गतवान्।

अनन्तरं लवङ्गसेनः शान्तमुनिं प्रवृत्तं सर्वं विस्तरेण निवेदितवान्। अग्रे किं करणीयम् इति पृष्टवान् च।

तदा शान्तमुनिः किञ्चित् विचिन्त्य– "भवान् बहूनि वर्षाणि यावत् योगजीवनं कृतवान् अस्ति। मम समीपे या ज्ञानसम्पत्तिः अस्ति तस्याः सम्पत्तेः उत्तराधिकारिणं



भवन्तं कृत्वा हिमालयं गच्छामि इति चिन्तयन् आसम् अहम्। भवतु, कानिचन वर्षाणि अहं भवतः प्रतीक्षां करोमि। भवान् इदानीं प्लवङ्गदेशं गत्वा समीचीनतया राज्यभारं निर्वहतु। भवतः अनुजस्य पुत्राय उत्तमं राजनीतिशिक्षणं दत्त्वा शीघ्रातिशीघ्रं तं युवराजं करोतु" इति उक्तवान्। लवङ्गसेनः शान्तमुनेः वचनम् अङ्गीकृतवान्।

अनन्तरदिने महाराज्ञी इन्दुमती आश्रमम् आगत्य लवङ्गसेनं प्रार्थितवती– "कृपया भवता प्लवङ्गदेशं प्रति आगन्तव्यम्। मम पुत्रे, मयि, राज्ये च यदि भवतः प्रीतिः अस्ति, तर्हि राज्यभारं निर्वहतु" इति।

लवङ्गसेनः इन्दुमत्याः वचनम् अङ्गीकृतवान्। अनन्तरं शान्तमुनेः अनुज्ञां प्राप्य सः नगरं प्रति प्रस्थितः। शान्तमुनेः हितोपदेशं स्मरन् लवङ्गसेनः श्रद्धया राज्यपालनम् आरब्धवान्।

कदाचित् लवङ्गसेनः मन्त्रिभिः सह समालोचनं कृतवान्। तदा तेन ज्ञातं यत्– राज्यपालनसमये राजा अनङ्गसेनः प्रजानाम् अभिप्रायं न शृणोति स्म, स्वेच्छया व्यवहरति स्म, तेन कारणेन देशस्य परिस्थितिः विषमा जाता इति। लवङ्गसेनः मन्त्रिणाम् अभिप्रायेषु उत्तमान् अंशान् केवलं स्वीकृतवान्।

अनन्तरम् इन्दुमत्या सह समालोचनं कृतवान् लवङ्गसेनः। तदा इन्दुमती– "मम पिता बाल्ये एव मह्यं राजनीतिशिक्षणं दत्तवान्। अतः अहं राजनीतिविषये किञ्चित् जानामि। किन्तु भवतः अनुजः माम् अभिप्रायान् कदापि न पृच्छति स्म। एतत् मम दौर्भाग्यम्" इति वदन्ती स्वकीयान् अभिप्रायान् लवङ्गसेनं निवेदितवती।

राज्यपालनविषये इन्दुमती यान् अभिप्रायान् प्रकटितवती ते सर्वे अपि अभिप्रायाः उत्तमाः एव आसन्। एतेन इन्तुमती अतीव बुद्धिमती, ज्ञानवती च इति ज्ञातवान् लवङ्गसेनः। अनन्तरकाले लवङ्गसेनः स्वबुद्धिमत्तया उत्तमाः व्यवस्थाः कृतवान्। वर्षाभ्यन्तरे एव राज्ये सुस्थितिम्

आनीतवान् च।

लवङ्गसेनः राजसम्बन्धिव्यवहारान् निर्वर्तयन् एव युवराजाय प्लवङ्गाय राजनीतिशिक्षणं दातुम् आरब्धवान्। प्लवङ्गः अध्ययने चतुरः। सः शीघ्रम् एव सर्वम् अधीतवान्। एतेन अतीव सन्तुष्टः लवङ्गसेनः इन्दुमतीम् उक्तवान्– "प्लवङ्गः पञ्चदशवर्षीयः यदा भवति तदा तं युवराजपदवीम् आरोप्य अहम् पुनः आश्रमं गमिष्यामि। भवत्याः सहकारेण प्लवङ्गः चिरकालम् उत्तमरूपेण राज्यभारं निर्वक्ष्यति" इति।



लवङ्गसेनस्य वचनं श्रुत्वा इन्दुमती दुःखेन उक्तवती– "कृपया तथा मा करोतु। प्लवङ्गः यावत् विंशतिवर्षीयः भवति तावत् भवता राज्यपालनं करणीयम् एव। अनन्तरं तस्य पट्टाभिषेकं करोतु। नो चेत् शत्रवः अकस्मात् अस्माकम् उपरि आक्रमणं कुर्युः। तेन अस्माकं राजवंशस्य गौरवं नश्यति। प्रजाः अपि अस्मान् निन्देयुः" इति।

इन्दुमत्याः अन्तरङ्गं, प्लवङ्गस्य असहायकतां च दृष्ट्वा अन्ते लवङ्गसेनः इन्दुमत्याः प्रार्थनाम् अङ्गीकृतवान्। एवमेव पञ्चषाणि वर्षाणि अतीतानि।

एकस्मिन् दिने शान्तमुनिः प्लवङ्ग-राज्यस्य राजधानीम् आगत्य लवङ्गसेनम् उक्तवान्– "दिने दिने मम वार्धक्यम् अधिकं भवत् अस्ति। मदीयां ज्ञानसम्पत्तिं परिगृह्य भवान् मम आश्रमे प्रधानस्थानं निर्वहति चेत् अहं हिमालयं गच्छामि। अतः भवता मया सह आश्रमं प्रति आगन्तव्यम्" इति।

तदा शान्तमुनिं किमपि अनुक्त्वा तम् इन्दुमत्याः समीपं नीतवान्। शान्तमुनेः आशयं निवेदितवान् च। इन्दुमती शान्तमुनेः आशयं श्रुत्वा दुःखेन शान्तमुनिम् उक्तवती– "लवङ्गसेनम् आश्रमं प्रति कृपया मा नयतु। तेन अत्र अस्माकं राज्यपालने महत् कष्टं भवति" इति।

अनन्तरं लवङ्गसेनः सर्वे मन्त्रिणः, राजोद्योगिनः, सर्वाः प्रजाः च आहूय एकां महतीं सभाम् आयोजितवान्। सर्वान् उद्दिश्य शान्तमुनेः आशयं निवेदितवान् च। तदा



अस्ति। शाश्वतं त्यक्त्वा अशाश्वतं चिन्तयति भवतः मनः। सम्यक् विचिन्त्य निर्णयं स्वीकरोतु। यदि भवान् पुनः आश्रमम् आगन्तुम् इच्छति तर्हि एकमासाभ्यन्तरे आगच्छतु'' इति उक्त्वा ततः गतवान्।

सप्ताहः अतीतः। एकस्मिन् दिने कोशागारे चौर्यं कुर्वन्तं कञ्चित् भटाः गृहीतवन्तः। मन्त्रिणः दीननाथस्य पुत्रः एव चौर्यं कृतवान् आसीत्। तं न्यायालयं नीतवन्तः भटाः। तत्र विचारणात् ज्ञातं यत्— दीननाथः पुत्रद्वारा चौर्यं कारयति स्म इति, बहोः कालात् दीननाथः कोशागारतः बहुवारं चौर्यं कृतवान् आसीत् इति च।

न्यायाधिकारी दीननाथस्य पुत्रस्य मरणदण्डनं विहितवान्। पुत्रस्य मरणदण्डनं श्रुत्वा दीननाथः कोपेन न्यायाधिकारिणम् पृष्टवान्— ''न्यायं वक्तुं भवतः का योग्यता अस्ति? प्रतिवर्षम् अहं लक्षं रूप्यकाणि भवते उत्कोचरूपेण यच्छन् अस्मि। महाराजः नूतनः इत्यतः भवान् आत्मनः सज्जनत्वं ख्यापयितुं मम पुत्रं दण्डं विहितवान्। एतत् किम् उचितम्?'' इति।

तदा न्यायाधिकारी स्वकीयम् अपराधं निराकुर्वन् उक्तवान्— ''भवान् विना कारणं मयि आरोपं कुर्वन् अस्ति। एतद्विषये अहं किमपि न जानामि। महाराजः एव भवन्तं विचारयिष्यति'' इति।

न्यायाधिकारिणः वचनं श्रुत्वा दीननाथः

सर्वेऽपि अश्रूणि स्रावयन्तः शान्तमुनिं प्रार्थितवन्तः— ''कृपया अस्माकं महाराजं मा नयतु भवतः आश्रमम्। यतः सः एव अस्माकं पोषकः हितचिन्तकः च'' इति।

प्रजानां स्वविषयिणीं प्रीतिं ज्ञात्वा लवङ्गसेनः सन्तुष्टः। सः शान्तमुनिम् उक्तवान्— ''स्वामिन्! यदि अहम् अत्र न भवामि तर्हि राज्ये अराजकता भवति। अतः इदानीम् आश्रमं प्रति मम आगमनम् उचितं न भवेत् किल!'' इति।

शान्तमुनिः तदा किमपि न उक्तवान्। अनन्तरं लवङ्गसेनम् एकत्र आहूय— ''यद्यपि भवान् ज्ञानी, विवेकी च, तथापि इदानीं सन्दर्भवशात् मायाजाले पतितः

उच्चैः हसन् उक्तवान्– "महाराजः अपि मां दण्डयितुं न अर्हति। चौर्यकार्ये अहं चतुरः इति ज्ञात्वा महाराजः अपि मम साहाय्यं स्वीकुर्वन् अस्ति। यदि महाराजस्य सहकारः न स्यात् तर्हि मम पुत्रः कथं धैर्येण चौर्यं कर्तुं शक्नुयात्? दौर्भाग्यवशात् अद्य अकस्मात् राजभटाः मम पुत्रं गृहीतवन्तः" इति।

महाराजविषये एतादृशम् आरोपं श्रुत्वा न्यायालये उपविष्टाः सर्वेऽपि चकिताः। मन्त्री सुबुद्धिः दीननाथं पृष्टवान्– "महाराजस्य लवङ्गसेनस्य कोशागारतः चौर्यकरणस्य आवश्यकता का अस्ति?" इति।

तदा दीनानाथः उक्तवान्– "केनापि अज्ञातं रहस्यम् एतत्। वदामि, शृण्वन्तु तावत्। महाराजस्य लवङ्गसेनस्य काचित् पत्नी अरण्ये अस्ति। एकः पुत्रः अपि अस्ति। स्वपुत्रः एव युवराजः भवेत् इति लवङ्गसेनः इच्छति। अतः सः उपायेन इदानीम् एव धनसङ्ग्रहणं कुर्वन् अस्ति। धनाशां प्रदर्श्य सैनिकान् वशीकृत्य अरण्ये सैन्यं सङ्ग्रहणीयम् इति, ततः सैन्यबलेन देशे विप्लवम् उत्पाद्य राज्ञी इन्दुमती, युवराजः प्लवङ्गः चापि संहरणीयौ इति च तस्य योजना। एतद्विषये सः बलात् मां नियोजितवान्। अनन्यगतिकतया मया चौर्यकार्ये गुप्तरूपेण साहाय्यं कृतम्" इति।

एषा वार्ता समग्रे राज्ये महतीं प्रतिक्रियाम्



अजनयत्। एतं विषयम् एव अधिकृत्य सर्वाः अपि प्रजाः लवङ्गसेनं विविधान् प्रश्नान् प्रष्टुः आरब्धवत्यः। महाराज्ञी इन्दुमती अपि लवङ्गसेनम् विचारितवती। तदा लवङ्गसेनः 'एषः कल्पितः विषयः। एतद्विषये अहं किमपि न जानामि' इति उक्तवान्।

किन्तु राज्ञ्याः इन्दुमत्याः लवङ्गसेनस्य चारित्र्यविषये सन्देहः। अतः सा तम् उक्तवती– "यदि भवतः दोषः न स्यात्, यदि भवान् निरपराधी स्यात्, तर्हि भवान् राज्यं त्यक्त्वा गच्छतु इतः। तेन भवतः राज्याकांक्षा अपि नास्ति इति मम विश्वासः भवेत्" इति।

तदा लवङ्गसेनः उक्तवान्– "भवतु, अहं गच्छामि इतः। किन्तु एकः नियमः।

चौर्यकरणे दीननाथस्य कोऽपि दोषः नास्ति। मम वचनानुसारम् एव दीननाथः पुत्रं कोशागारसमीपं चौर्यार्थं प्रेषितवान्। न्यायालये असत्यं वदतु इत्यपि मया एव उक्तम् आसीत्। अतः दीननाथाय किमपि दण्डनं न दातव्यम्। तथा भवती वचनं ददाति चेत् एव अहम् अरण्यं निरातङ्कं गन्तुं शक्नोमि" इति।

लवङ्गसेनस्य वचनं श्रुत्वा इन्दुमती आश्चर्येण पृष्टवती– "दीननाथद्वारा भवान् एवं नाटकं कारितवान् वा? किमर्थम् एवं कृतवान्?" इति।

तदा लवङ्गसेनः शान्तस्वरेण– "मम गुरुः शान्तमुनिः माम् उक्तवान् यत् भवत्याः, सर्वासां प्रजानां च अभिमानः आशाश्वतः इति। अतः वस्तुस्थितिं ज्ञातुम् अहम् एवं व्यवहृतवान्। अहम् एतावत्पर्यन्तं श्रद्धया निष्ठया च राज्यपालनं कृतवान् अस्मि। प्रजाः सर्वाः सुखेन जीवेयुः इति विचिन्त्य अहं यथाशक्ति परिश्रमं कृतवान्। मम प्रोत्साहतः एव कश्चित् चौर्यं कृतवान्। आपत्काले आत्मानं रक्षितुं किमपि असत्यं कथितवान्। तेन चोरेण उक्तम् एव सत्यम् इति चिन्तयन्तः भवन्तः माम् अपराधिनं कृतवन्तः। 'निरपराधी इति निरूपयतु' इति माम् आज्ञप्तवती भवती। भवत्सु केनापि न उक्तम् यत्– 'लवङ्गसेनः सर्वथा चौर्यं न करोति। दीननाथः एव चौर्यं कृतवान् स्यात्। चोरस्य वचने विश्वस्य महाराजे सन्देहः न करणीयः। दीननाथेन एव स्ववचनं साक्षिपुरस्सरं प्रमाणीकरणीयम्' इति। एवं येन केनचित् चिन्तितं यदि स्यात् तर्हि अहम् अत्रैव राज्यपालनं कुर्वन् अस्थास्यम्। महाराजः चोरः च यस्मिन् राज्ये समानरूपेण गौरवं प्राप्नुतः तस्मिन् राज्ये प्रजासु वा महाराजे वा कश्चन लोपः अस्ति इत्यर्थः। भवतां मद्विषयकं गौरवम् अशाश्वतम् इति अहम् अद्य ज्ञातवान्। अतः शाश्वतं ज्ञानं प्रति गच्छामि" इति उक्त्वा ततः शान्तमुनेः आश्रमं गतवान्।





# विचित्रं पुष्पम्

६

(माणिक्यपुरीराज्यं राक्षसतः रक्षितुम् इच्छन् राजा प्रतापवर्मा पर्वतकुलीयानां साहाय्यं प्राप्तुं शृङ्गमयपर्वतम् उद्दिश्य गतवान्। युवराज्ञ्या सह आगतं महाराजं दृष्ट्वा पर्वतकुलीयाः सर्वे नितरां सन्तुष्टाः। राज्ञः आशयं ज्ञात्वा उत्तुङ्गः उक्तवान् यत् एतत् कार्यं कर्तुम् अहं सिद्धः इति। युवराज्ञी शताब्दिकापुष्पाणि समीपतः दृष्ट्वा आगतवती। राजा सन्तोषेण राजधानीं प्रतिगतवान्।. तदनन्तरम्....)

'युवराज्ञ्या प्रियवंदया सह राजा प्रतापवर्मा अस्मदीयं वासस्थलम् आगतवान् आसीत्' इत्येवम् अंशं स्मरन्तः पर्वतकुलीयाः महान्तं सन्तोषम् अनुभूतवन्तः। राजा तेषां साहाय्यं प्रार्थितवान् यत्, राज्यस्य कष्टस्य निवारणार्थं पर्वतकुलीयेषु एव अन्यतमः उत्तुङ्गः सिद्धः जातः यत्, तदुभयम् अपि तेषु सन्तोषम् अभिमानं च अजनयत्। 'उत्तुङ्गः स्वकार्ये यशस्वितां प्राप्नोतु' इति ते कुलदेवतां भक्त्या प्रार्थितवन्तः। उत्तुङ्गस्य प्रेषणसन्दर्भं निमित्तीकृत्य ते विशेषभोजनं व्यवस्थापितवन्तः।

ज्येष्ठाः, कनिष्ठाः,–सर्वे अपि वसतिप्रदेशस्य समीपे स्थिते एकस्मिन् विशाले अङ्गणे सम्मिलिताः। नायकः शुम्भः अन्ये कुलज्येष्ठाः च एकत्र



उपविष्टवन्तः। उत्तुङ्गाय अपि तत्पार्श्वे एव आसनं कल्पितम्। भोजनं कुर्वन्तः एव अनुभविनः कुलज्येष्ठाः समालोचनं कृतवन्तः यत् सः राक्षसः केन उपायेन सम्मुखीकृतः चेत् वरं स्यात् इति।

एवं चर्चापुरस्सरम् एव भोजनकार्यक्रमः समाप्तः। भोजनस्य अन्ते शुम्भः उत्थाय— "शताब्दिकापुष्पाणि कुत्र विकसितानि इति उत्तुङ्गः जानाति। श्वः तेन सह अन्ये षट् जनाः गत्वा तानि पुष्पाणि सङ्गृह्णीयुः। रात्रिसमये राक्षसस्य आगमनं सम्भाव्यते इत्यतः सूर्यास्तात् पूर्वम् एव एतत् कार्यं समापनीयम्।" इति उक्त्वा क्षणकालम् आलोच्य पुनः उक्तवान्— "तानि पुष्पाणि समुद्रमध्यं प्रापणीयाणि चेत् काचित् नौका आवश्यकी खलु? समुद्रतीरस्थाः सर्वे प्रदेशाः नाशं गताः इत्यतः तत्र नौकायाः प्राप्तिः असम्भवा एव। अतः अत्रैव एका नौका सज्जीकृत्य नेतव्या। भवत्सु कोऽपि नौकानिर्माणं जानाति वा?" इति।

तदा जनानां मध्यतः उभौ अग्रे आगत्य उक्तवन्तौ— "आवां पूर्वं समुद्रतीरप्रदेशे वसावः स्म। अतः योग्यां नौकाम् आवां निर्मास्यावः" इति।

"एतदर्थं कति दिनानि अपेक्षितानि?" इति पृष्टवान् उत्तुङ्गः।

"दिनद्वयाभ्यन्तरे सज्जीकरिष्यावः श्रीमन्!" इति उक्तवन्तौ तौ।

"अस्तु तर्हि" इति उक्त्वा जनान् पश्यन् पुनः पृष्टवान् शुम्भः— "श्वः प्रातः पुष्पाणां सङ्ग्रहार्थम् उत्तुङ्गेन सह गन्तुं के सिद्धाः?" इति। तत्क्षणे एव बहवः युवकाः अहमहमिकया हस्तम् उन्नीतवन्तः।

"भवताम् उत्साहं दृष्ट्वा अहं नितरां सन्तुष्टः अस्मि। मया सह बहुभिः गन्तव्यं नास्ति। षट् जनाः आगच्छन्ति चेत् पर्याप्तम्" इति वदन् उत्तुङ्गः तेषु षट् जनान् चित्वा पार्श्वे स्थापितवान्।

ततः उत्तुङ्गः नायकं शुम्भम्, अन्यान् कुलज्येष्ठान् च विनयेन नमस्कृत्य आशीर्वादं प्राप्तवान्। नायकः शुम्भः प्रीत्या अभिमानेन च उत्तुङ्गम् आलिङ्ग्य 'विजयी भवतु

भवान्' इति आशीर्वादं कृतवान्। अनन्तरम् उत्तुङ्ग· भगिन्या रजन्या सह स्वकुटीरं गतवान्।

अनन्तरदिने प्रातः उत्तुङ्गः षड्भिः मित्रैः सह तं पर्वतम् उद्दिश्य गतवान्, यस्मिन् च शताब्दिकापुष्पाणि विकसितानि आसन्। मध्याह्नसमये ते तं पर्वतं प्राप्तवन्तः। परशुभिः शताब्दिकापुष्पाणां वृक्षान् पातितवन्तः। वृक्षाग्रे स्थितानि पुष्पाणि सङ्गृह्य राशिरूपेण बद्धवन्तः। एतावता एव सायङ्कालः जातः। उत्तुङ्गः शताब्दिकापुष्पजातीयं सस्यद्वयम् उत्पाट्य पुष्पराशौ योजितवान्। ततः पुष्पबन्धाः शकटे आरोपिताः। सूर्यास्तसमये सर्वे सन्तोषेण स्ववसतिम् आगतवन्तः।

वसतिं प्रत्यागतान् तान् पृष्टवान् शुम्भः— "भवन्तः यदर्थं गतवन्तः तत् कार्यं निर्विघ्नं सम्पन्नं खलु?" इति।

"आम्" इति वदन् मन्दहासपूर्वकं शिरः चालितवान् उत्तुङ्गः।

"श्वः सायङ्कालाभ्यन्तरे नौका सिद्धा भवेत्। परश्वः प्रातः समुद्रं प्रति प्रस्थातुं शक्येत" इति तान् उद्दिश्य उक्तवान् शुम्भः— निर्माणस्तरे स्थितां नौकां प्रदर्शयन्।

अनन्तरं सः उत्तुङ्गम् उद्दिश्य— "दीर्घप्रयाणेन परिश्रमेण च भवन्तः सर्वे श्रान्ताः स्युः। अतः गृहं गत्वा विश्रान्तिसुखम् अनुभवन्तु। एतेषां पुष्पाणां रक्षणार्थम् अद्य अहम् अन्यान् नियोजयिष्यामि" इति





उक्तवान्।

उत्तुङ्गः एतं प्रस्तावम् अङ्गीकुर्वन् मित्रैः सह ततः निर्गतवान्।

मध्यरात्रपर्यन्तम् अपि शुम्भः रक्षणकार्ये निरतैः सह वार्तालापं कुर्वन् तत्रैव स्थितवान् आसीत्। 'भवान् गत्वा विश्रान्तिसुखम् अनुभवतु' इति सहचरैः बहुधा यदा उक्तं तदा शुम्भः विश्रान्त्यर्थं ततः निर्गतवान्।

प्रातःकाले रक्षणकार्यनिरताः शुम्भस्य समीपम् आगत्य निवेदितवन्तः– ''रात्रौ सः राक्षसः तु अत्र न आगतः। किन्तु दूरे कुत्रचित् वृक्षाणां पतनस्य, शिलानां भङ्गस्य च शब्दाः, अन्ये विचित्राः शब्दाः च श्रूयन्ते स्म। चतुर्थे यामे ते शब्दाः पुनः न श्रुताः'' इति।

''एवं वा? अस्तु, भवन्तः गच्छन्तु तावत्'' इति उक्तवान् शुम्भः।

नायकस्य आज्ञानुसारम् उत्तुङ्गः पूर्वदिने आनीतं शताब्दिकापुष्पराशिं नौकासमीपम् आनीतवान्। तावता शुम्भः, भगिनी रजनी चापि तत्र उपस्थितौ आस्ताम्। नौका तु सिद्धा आसीत्। शुम्भः क्षणकालं यावत् पुष्पाणां राशिम् आश्चर्येण दृष्टवान्। पुष्पाणां सौगन्ध्यात् न सर्वे वशीकृताः आसन्।

अल्पे एव काले शुम्भः, उत्तुङ्गः, रजनी च ततः प्रस्थितवन्तः। परिवारजनाः बहवः तान् अनुसृतवन्तः। दृढकायाः चत्वारः नौकां भुजाभ्यां वहन्तः पृष्ठतः आगतवन्तः। सर्वे दक्षिणसमुद्राभिमुखं गतवन्तः।

बहवः तान् किञ्चिद्दूरम् अनुसृत्य आगत्य शुभप्रयाणम् आशंसितवन्तः।

सूर्यास्तात् पूर्वं समुद्रतीरं प्राप्तव्यम् इति उद्देशेन ते सर्वे वेगेन गच्छन्तः आसन्। अर्धदूरं यदा अतिक्रान्तं तदा मध्याह्नः जातः। अतः ते कस्यचित् विशालस्य वटवृक्षस्य अधः उपविश्य विश्रान्तिसुखम् अनुभूतवन्तः। भोजनादिकम् अपि समापितवन्तः। ततः पुनरपि प्रयाणम् अनुवृत्तम्। सूर्योदयात् पूर्वम् एव ते समुद्रतीरं प्राप्तवन्तः। ये नौकाम् उन्नीय आगतवन्तः आसन् ते तां नौकां भूमौ अवतारितवन्तः। अन्यै पुष्पराशिं नौकायां पूरितवन्तः। उत्तुङ्गः नायकं नमस्कृतवान्। शुम्भः तं प्रीत्या गृहीत्वा उत्थापयन्–



"वत्स! भवान् अवश्यं विजयी भविष्यति। कुलदेवतायाः अनुग्रहः अस्तीत्यतः विना क्लेशं सफलता प्राप्यते भवता" इति उक्तवान्, आशिषा अनुगृहीतवान् च।

पार्श्वे स्थिता रजनी– "भवता शीघ्रं प्रत्यागन्तव्यम्। वयं भवतः प्रतीक्षां कुर्वन्तः भविष्यामः" इति उक्त्वा पाथेयग्रन्थिं तस्मै दत्त्वा पुनः उक्तवती– "मध्येमार्गं बुभुक्षानिवारणार्थम् एतत्" इति।

उत्तुङ्गः हसन् तत् स्वीकृत्य– "भवत्याः कोऽपि क्लेशः यथा न भवेत् तथा युवराज्ञी सर्वं व्यवस्थापयिष्यति। अहम् अचिरात् एव प्रत्यागमिष्यामि। युवराज्ञीम् अपि एतं विषयं वदतु" इति उक्तवान्। ततः मित्राणि दृष्ट्वा मन्दहासं प्रकट्य नौकाम् आरुह्य चालनदण्डं हस्तेन गृहीतवान्।

सर्वे नौकां नुदन्तः जले अवतारितवन्तः। नौका तरङ्गगतिम् अनुसरन्ती उपर्यधः गच्छन्ती अग्रे गतवती। तीरे स्थिताः सर्वे हस्तम् उन्नीय चालयन्तः उत्तुङ्गस्य शुभप्रयाणम् आशंसितवन्तः। नौका वेगेन अग्रे गता।

यावत् नौका दृश्यते तावत् शुम्भः तत्रैव स्थित्वा पश्यन् आसीत्। यदा नौका दृष्टिविदूरा जाता तदा सः ततः प्रस्थितवान्। अन्ये तम् अनुसृतवन्तः। रजन्याः दुःखं शमयितुं शुम्भः प्रीत्या तस्याः स्कन्धे हस्तं स्थापितवान्। सर्वे राजधानीम् उद्दिश्य गतवन्तः।

गमनसमये मार्गे ते धूलिसात् जातानि गृहाणि, वृक्षान् च दृष्टवन्तः। उध्वस्तः सः प्रदेशः तेषु खेदम् अजनयत्। 'मानवमात्रेण एतत् कर्तुं सर्वथा न शक्यम्। तस्य राक्षसस्य एव कृत्यम् एतत्' इति परस्परं वदन्तः ते अग्रे गतवन्तः। रात्रिः आसन्ना आसीत्। रात्रौ यदा कदाचित् वा राक्षसतः अपायः सम्भवेत् इत्यतः ते यावच्छीघ्रं तं प्रदेशम् अतिक्रमितुम् इच्छन्तः वेगेन पदानि स्थापितवन्तः। किञ्चिद्दूरं यदा गतं तदा अरण्यं प्राप्तम्। आकाशः मेघैः आच्छन्नः आसीत्। सर्वत्र घोरः अन्धकारः आसीत्। एतादृश्यां स्थितौ अग्रे गन्तुम् अशक्नुवन्तः ते अरण्ये एव कुत्रचित्

वासं कृतवन्तः, तां रात्रिं यापितवन्तः च।

पूर्वस्यां दिशि यदा किरणाः उदिताः तदा उत्थाय ततः प्रस्थितवन्तः ते मध्याह्नसमये राजधानीं प्राप्तवन्तः। राजभवनं प्राप्य— 'अस्माकम् आगमनं महाराजं निवेदयतु' इति रेक्षकभटान् उक्तवन्तः।

राजा सेनापतिना गम्भीरसिंहेन सह समालोचनं कुर्वन् आसीत्। यदा भटद्वारा शुम्भादीनाम् आगमनं ज्ञातं तदा सः झटिति उत्थाय गम्भीरसिंहेन सह गत्वा तान् सर्वान् आदरेण स्वागतीकृतवान्।

''माणिक्यपुर्याः रक्षणार्थं भवद्भिः सर्वैः या श्रद्धा आसक्तिः च प्रदर्श्यते सा नितरां श्लाघ्या एव। भवतां त्यागगुणं साहसशीलतां च प्रजा सर्वाः आजीवनं स्मरिष्यन्ति'' इति उक्तवान् राजा।

''देशसेवां किञ्चित् वा कर्तुम् अल्पः अवकाशः प्राप्तः यत् तदर्थं वयं नितरां सन्तुष्टाः स्मः। अस्माभिः कर्तव्यमात्रं कृतं, नान्यत् विशिष्टं किमपि। ह्यः सायम् उत्तुङ्गः शताब्दिकापुष्पाणि नौकायाम् आरोप्य राक्षसमृगम् अन्विष्यन् समुद्रमार्गम् आश्रितवान्'' इति उक्तवान् शुम्भः।

''साहसी खलु सः। साहसे श्रीः प्रतिवसति'' इति वदन् राजा रजनीं पश्यन् उक्तवान्— ''आगच्छतु अत्र रजनि!'' इति।

तावता रजन्याः आगमनस्य वार्तां श्रुत्वा युवराज्ञी प्रियंवदा तत्र आगतवती। मन्दहासपूर्वकं रजन्याः समीपं गत्वा— ''अद्य आरभ्य आवां सख्यौ'' इति वदन्ती तस्याः हस्तं गृहीत्वा ताम् अन्तःपुरं नीतवती।

''नौकाम् आरुह्य गच्छन् मम अग्रजः उक्तवान् यत् अचिरात् एव आगमिष्यामि इति। एतं विषयं भवतीम् अपि वक्तुम् उक्तवान् सः'' इति उक्तवती रजनी।

''एवं वा? महान् सन्तोषः। भवत्याः अग्रजः विजयी सन् एव प्रत्यागमिष्यति इत्यत्र नास्ति सन्देहः'' इति मन्दहासपूर्वकम् उक्तवती युवराज्ञी।

—(अनुवर्तते)



# वेदान्तिनः पत्नी

विद्यापुरे श्वेताम्बरनामकः कश्चन वेदन्ती आसीत्। सः आमूलं वेदान्तविषयान् अधीत्य कञ्चन श्रेष्ठं ग्रन्थं लिखित्वा दिवङ्गतः। तेन लिखितं ग्रन्थम् अवगन्तुं महान्तः पण्डिताः अपि कष्टम् अनुभवन्ति स्म।

शङ्करशास्त्रिनामकः कश्चन श्वेताम्बरेण लिखितं ग्रन्थम् अधिकृत्य व्याख्यानं लेखितुम् आरब्धवान्। व्याख्यानलेखनसमये शङ्करशास्त्रिणः बहवः सन्देहाः उत्पन्नाः। तस्य सन्देहानां परिहारं कर्तुं पण्डिताः अपि असमर्थाः जाताः।

शङ्करशास्त्रिणः पत्नी कदाचित् पतिम् उक्तवती– "श्वेताम्बरस्य पत्नी इदानीम् अपि जीवति। पतिः वेदान्ती आसीत् इति कारणतः वेदान्तस्य प्रभावः किञ्चित् वा पत्न्यां स्यात् एव। अतः भवान् तां पृष्ट्वा भवतः सन्देहनिवारणं करोतु" इति।

शङ्करशास्त्री पत्न्याः वचनानुसारम् अनन्तरदिने वेदान्तिनः श्वेताम्बरस्य गृहं गतवान्। तस्य पत्नीं पृष्टवान् च– "भवत्याः पत्या यः वेदान्तग्रन्थः लिखितः तत्रत्यान् कांश्चन विषयान् भवती सम्यक् ज्ञातवती स्यात् इति चिन्तयामि। तद्विषये मम केचन सन्देहाः सन्ति। कृपया भवती मम सन्देहानां निवारणं करोति वा?" इति।

तदा श्वेताम्बरस्य पत्नी मन्दहासपूर्वकं– "पत्युः सेवां कुर्वत्याः, तम् अवगन्तुं प्रयत्नं कुर्वत्याः एव मम वैवाहिकजीवनं यापितम् अभवत्। तादृश्याः मम, पत्या लिखितं ग्रन्थं पठितुं कुत्र समयः?" इति पृष्टवती।

एतत् वचनं श्रुत्वा शङ्करशास्त्री मौनं ततः गतवान्।






# सञ्जीवकविः

कृतं सङ्कल्पं परित्यक्तुम् अनिच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षस्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "हे राजन्! एतस्मिन् मध्यरात्रे बद्धकटिः भवान् किमर्थम् एतावन्तं परिश्रमं कुर्वन् अस्ति इति अहं न जानामि। किन्तु सर्वेषु सन्दर्भेषु अपि अस्माकं मनोभिलाषाः पूर्णाः न भवन्ति। सञ्जीवनामकः कश्चन कविः कञ्चन सामान्यम् अपि स्वकविताचातुर्येण महापुरुषत्वेन वर्णयन् धनं प्राप्नोति स्म। किन्तु वस्तुतः ये महापुरुषाः सज्जनाः च भवन्ति तेषां विषये कविताः न रचयति स्म। अनन्तरं कदाचित् परिस्थितेः प्रभावतः कस्यचित् महाराजस्य विषये कवितां रचयन् धनं सम्पादितवान् सः। तस्य सञ्जीवस्य कथां श्रावयामि। कथाश्रवणेन भवतः

## वेतालकथा



मार्गायासः अपि परिहृतः भवेत्। शृणोतु तावत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं रविचन्द्रनामकः राजा चन्दनदेशं पालयति स्म। यद्यपि सः महाराजः, तथापि सामान्यजनैः सह अपि विना अहङ्कारं व्यवहरति स्म। यः कोऽपि तं निन्दति चेत् अपि सः कुपितः न भवति स्म।

तस्मिन् राज्ये सञ्जीवनामकः कविः आसीत्। चमत्कारेण कवितालेखने प्रसिद्धः सः। स्वकविताचातुर्येण यं कमपि हासयति स्म सञ्जीवः। तस्य कविताः श्रोतुं बहवः इच्छन्ति स्म।

रविचन्द्रस्य आस्थानकविः श्वेतकेतुः कदाचित् सञ्जीवस्य ग्रामं गतवान् आसीत्। धनिकस्य कुलदीपस्य गृहे वासं कृतवान् सः। सम्भाषणावसरे कुलदीपः कवेः सञ्जीवस्य कवितां प्रशंसन् तद्विषये विस्तरेण श्वेतकेतुम् उक्तवान्। तत् श्रुत्वा श्वेतकेतुः सञ्जीवस्य गृहं गत्वा स्वपरिचयम् उक्त्वा तस्य कवितां श्रोतुम् इच्छां प्रकटितवान्।

तदा सञ्जीवः मन्दहासपूर्वकम् उक्तवान्– ''कुलदीपस्य वचनेन भवान् भ्रान्तः मा भवतु। कुलदीपस्य जन्मजातः शत्रुः मणिकण्ठः। अहं मणिकण्ठविषये चमत्कारेण काश्चन कविताः रचितवान्। ताः कविताः श्रुत्वा सर्वे मणिकण्ठम् उपहसितवन्तः। तदर्थं मद्विषये कुलदीपस्य महान् अभिमानः। कुलदीपविषये अहं प्रशंसापराणि पद्यानि लिखितवान् इत्यतः सः मां प्रशंसितवान्। वस्तुतः तु सः कवेः योग्यतायाः निर्णये असमर्थः'' इति।

सञ्जीवस्य वचनं श्रुत्वा श्वेतकेतुः अपि मन्दहासपूर्वकम् उक्तवान्– ''कुलदीपविषये भवता लिखिताः कविताः मया पठिताः। तासु कवितासु भवान् कुलदीपं मुक्तकण्ठं प्रशंसितवान् अस्ति। एतेन ज्ञायते यत् कुलदीपविषये भवतः अभिमानः अस्ति इति'' इति।

तदा सञ्जीवः– ''कुलदीपविषये मया लिखिताः कविताः पठित्वा सः महापुरुषः इति मा चिन्तयतु भवान्। मम धनस्य

आवश्यकता आसीत्। अतः प्रशंसापरां कवितां लिखितवान्। यः धनं दत्त्वा स्वविषये कविताः लेखयति सः महापुरुषः न'' इति उक्तवान्।

''किन्तु कुलदीपविषये भवता लिखिताः कविताः अपूर्वाः रमणीयाः च किल! भवान् एतादृशीः कविताः यदि अस्माकं महाराजस्य रविचन्द्रस्य विषये लेखिष्यति तर्हि आजीवनं सुखेन जीवितुं शक्ष्यति'' इति उक्तवान् श्वेतकेतुः।

तदा सञ्जीवः उक्तवान्– ''भोः! सामान्यजनानां प्रशंसां कुर्वन् धनं सम्पादयामि। एतादृशः अहं, महाराजस्य रविचन्द्रस्य विषये कविताः रचयामि चेत् तस्य अपमाननं भवति'' इति।

सञ्जीवस्य वचनं श्रुत्वा श्वेतकेतुः किमपि न उक्तवान्। अनन्तरं श्वेतकेतुः राजधानीं गत्वा महाराजं रविचन्द्रं सञ्जीवविषये विस्तरेण निवेदयन्– ''प्रभो! एतावत्पर्यन्तम् अपि अहम् एव महान् कविः इति मयि अहम्भावः आसीत्। किन्तु सञ्जीवस्य कविताचातुर्यं दृष्टवतः मम अहम्भावः अपगतः। सञ्जीवः यद्यपि धनसम्पादनार्थं सामान्यानां प्रशंसां करोति, तथापि तस्य धनाशा नास्ति। यतः स्वकविताचातुर्येण सः बहूनां धनिकानां मनांसि खेदितवान् अस्ति। यदि धनाशा स्यात् तर्हि तादृशानि कार्याणि न अकरिष्यत्



किल सः'' इति उक्तवान्।

रविचन्द्रः चमत्कारप्रियः। सः अनन्तरदिने एव कविं सञ्जीवम् आनाय्य उक्तवान्– ''कविवर्य! कानिचन दिनानि मम आस्थाने तिष्ठन् मम इच्छाः पूरयतु। अनन्तरं भवान् इच्छति चेत् मम आस्थानकविरूपेण अपि स्थातुम् अर्हति। नो चेत् अपि आजीवनं सुखेन जीवितुं यावत् आवश्यकं तावत् धनं दास्यामि'' इति।

सञ्जीवः क्षणकालं विचिन्त्य– ''प्रभो! भवतः वचनम् अङ्गीकरोमि अहम्। भवान् यं सूचयति तस्य विषये कवितां रचयामि च। मया लिखितं प्रथमं भवते दर्शयामि। अनन्तरं सभायां वदामि'' इति।



"तथा मास्तु। प्रथमवारं सभासद्भिः सह श्रवणेन एव मम सन्तोषः भवति" इति उक्तवान् रविचन्द्रः। किन्तु सञ्जीवः एतत् न अङ्गीकृतवान् इति कारणतः राजा रविचन्द्रः सञ्जीवस्य नियमम् अङ्गीकृतवान्।

कदाचित् सञ्जीवः कवितारूपेण एवम् उक्तवान्– "प्रभो! मया भवतः पाचकस्य पाचकः दृष्टः। एतत् दृष्ट्वा अहम् आश्चर्यम् अनुभवन् चिन्तितवान् यत् पाचकस्य पाकः रुचिकरः भवति इत्यतः राजा कृतं समग्रं पाकं स्वयं खादति, पाचकाय किमपि न अवशिष्यते, अतः पाचकपाचकः पुनः पचति इति। किन्तु पाचकपाचकः मया यदा पृष्टः तदा तेन उक्तम्– 'राजकार्येषु सदा निरतः राजा पाकस्य रुचिविषये कदापि न चिन्तयति। यत् परिविष्टं तत् खादति। अतः मम स्वामी पाचकः प्रतिदिनं सामान्यं पाकं सज्जीकरोति। किन्तु स्वनिमित्तं रुचिकरं पाकम् इच्छन् सः मां नियोजितवान् अस्ति' इति" इति।

एतत् श्रुत्वा राजा सञ्जीवं मुक्तकण्ठं श्लाघितवान्। सभासदः सर्वेऽपि सञ्जीवस्य कवितानैपुण्यं श्लाघितवन्तः।

एवं यदा यदा सभा प्रचलति तदा सञ्जीवः यस्य कस्यचित् विषये चमत्कारपूर्वकं कवितां रचयित्वा वदति स्म। तस्य कविताः श्रोतुम् एव अनेके जनाः सभाम् आगच्छन्ति स्म।

महाराजस्य रविचन्द्रस्य चत्वारः मन्त्रिणः आसन्। तेषु चतुर्षु मन्त्रिषु वीरवरः प्रमुखः। यदि सः इच्छति तर्हि कमपि विषयं राज्ञा अङ्गीकारयति। कदाचित् सञ्जीवः मन्त्रिणं वीरवरम् अधिकृत्य चमत्कारपूर्वकं कवितां रचितवान्।

तस्याः कवितायाः आशयः यत्– एकदा यस्य कार्यस्य विषये महाराजस्य इच्छालेशः अपि नासीत् तत्कार्यविषये वीरवरः उपायेन राज्ञः अङ्गीकारं प्राप्तवान्। किन्तु काकतालीयन्यायेन तस्मात् कार्यतः राजा प्रगतिं प्राप्तवान्। तस्मात् अतीव सन्तुष्टः राजा वीरवराय रत्नकङ्कणं पारितोषिक-रूपेण दातुम् इष्टवान्। किन्तु वीरवरः तत् कङ्कणं स्वीकर्तुम् अनिच्छन् इतोऽपि

लघुकङ्कणं ददातु इति प्रार्थितवान्। 'सामान्यतः जनाः बृहद्गात्रकम् एव आवश्यकम् इति वदन्ति। भवान् लघु कङ्कणम् आवश्यकम् इति वदन् अस्ति। किमर्थम्?' इति आश्चर्येण राजा पृष्टवान्। तदा वीरवरः— 'बृहत्कङ्कणं मम पत्नी धर्तुं न शक्नोति इत्यतः' इति उक्तवान्।

तदा राजा उक्तवान्— "पत्न्यै अन्यत् लघुकङ्कणं कारयितुं शक्नोति किल भवान्। मया उपायनरूपेण दीयमानं कङ्कणं लघु कारयित्वा ददातु इति कथनं तु भवतः मूर्खतां दर्शयति" इति।

"प्रभो! भवतः आश्रये यावत् अहं तिष्ठामि तावत् मम पत्न्यै यावन्ति वा कङ्कणानि कारयितुं शक्नोमि। किन्तु इदानीं भवता दीयमानम् उपायनं तस्यै एव। यतः तस्याः चिन्तनानुसारम् एव मया पूर्वं सूचना दत्ता आसीत्" इति सविनयम् उक्तवान् वीरवरः" इति।

वीरवरः सर्वदा पत्न्याः वचनम् एव अनुसरति इति आशयम् एतेन क्रमेण सूचितवान् आसीत् सञ्जीवः।

सञ्जीवेन उक्ताम् एतां कवितां श्रुत्वा महाराजः उदरोपपीडं हसितवान्।

रविचन्द्रस्य अपरः मन्त्री सुबुद्धिः। सैन्यस्य सेनाधिपतेः च दायित्वं तस्य। सुबुद्धेः आदेशानुसारम् एव सेनाधिपतिः व्यवहरेत्। किन्तु सुबुद्धिः कृशकायः। एतत् सर्वं चिन्तयन् सञ्जीवः उक्तवान्— "महाराजः अतीव बुद्धिमान्। यतः सुबुद्धेः रक्षणार्थम्





उत्तमां व्यवस्थां कृतवान् अस्ति'' इति।

तृतीयः मन्त्री शिशुपालः अतीव मृदुमनस्कः। करुणाजनकं दृश्यं दृष्टं चेत् तस्य नेत्रे अश्रुपूर्णे भवतः स्म। शिशुपालस्य अपत्यानि न आसन्। पुत्रप्राप्त्यर्थं सः पूजादिकं व्रतादिकं च करोति स्म।

सञ्जीवः शिशुपालविषये चमत्कार-पूर्वकम् उक्तवान्– ''कदाचित् मया शिशुपालस्य गृहं प्रति गतम् आसीत्। तदा सः श्वासं निरुध्य रोदनं कुर्वन् आसीत्। तस्य अवस्थां दृष्ट्वा अहं भीतः। तदा तस्य पत्नी उक्तवती– 'भवान् भीतः मा भवतु। एतत् तु सामान्यम्। अस्माकम् पुत्राः न सन्ति इति या न्यूनता अस्ति तां न्यूनतां मम पतिः एव बहुधा निवारयति। तत्र एषः अपि कश्चन प्रकारः इति'' इति।

राजा रविचन्द्रः एतत् श्रुत्वा बहुकालं हसितवान्। अनन्तरं पृष्टवान्– ''सञ्जीव! शिशुः इव रुदन्तं शिशुपालं तस्य पत्नी सान्त्वयति स्म इति कल्पनामात्रेण एव हासं निरोद्धुं न शक्नोमि अहम्। कथं भवतः बुद्धौ एतादृश्यः कल्पनाः स्फुरन्ति?'' इति।

महाराजस्य चतुर्थः मन्त्री नवनीतः वयसा कनिष्ठः। 'वस्तुतः आस्थाने नवनीतस्य आवश्यकता नासीत्, तथापि महाराजः तद्विषयकेण अभिमानेन तं मन्त्रिपदव्यां नियोजितवान्' इति जनाः वदन्ति स्म।

नवनीतः पूर्वं राजभवने कमपि उद्योगं करोति स्म। तेषु दिनेषु कदाचित् वायुविहारं कुर्वन्तं राजानं सर्पः कश्चन दंष्टुम् उद्युक्तः। तदा नवनीतः राजानं रक्षितुं गतः। सर्पः नवनीतम् एव दष्टवान्। अनन्तरं राजवैद्यः आगत्य औषधोपचारेण नवनीतं रक्षितवान्। नवनीतस्य कार्येण सन्तुष्टः राजा– 'भवान् यत् इच्छति तत् पृच्छतु' इति उक्तवान्। तदा नवनीतः– 'मन्त्रिपदवीम् इच्छामि' इति उक्तवान्। पूर्वम् एव आस्थाने समर्थाः त्रयः मन्त्रिणः आसन्, तथापि राजा प्राणदातुः नवनीतस्य प्रार्थनाम् अङ्गीकृतवान् आसीत्।

एतत् सर्वं मनसि स्थापयित्वा सञ्जीवः उक्तवान्– ''कदाचित् 'परमपदसोपान'-क्रीडायाम् अक्षसाधनं यदा सर्पपुच्छसमीपम्

आगतं तदा एषः नवनीतवर्यः तत् उपरि नीतवान्। तदा प्रतिस्पर्धी पृष्टवान्– 'अये, भवतः साधनं सर्पपुच्छसमीपं गतम् आसीत्, न तु निश्रेणीमूलसमीपम्। तथापि किमर्थम् एवं कृतम्?' इति। तदा नवनीतेन उक्तम्– 'मम विषये सर्पः एव निश्रेणीवत् आचरति' इति'' इति।

एतत् श्रुत्वा कुपितः राजा उक्तवान्– ''एतावद्दिनपर्यन्तम् अपि अहं चिन्तितवान् यत्– भवान् महापुरुषः, आदर्शवादी च इति, भवतः कविताचातुर्यम् अपूर्वम् इति च। किन्तु इदानीं ज्ञातं भवतः अन्तरङ्गम्। यस्य विषये भवतः आदरः नास्ति तस्य अपमाननं स्वकविताचातुर्येण करोति भवान्। नवनीतविषये लघुतया मा चिन्तयतु भवान्। तस्मिन् महत् सामर्थ्यम् अस्ति। तेन सह समालोचनं कृत्वा एव अहं बहुधा प्रयोजनं प्राप्तवान् अस्मि'' इति।

कुपितं महाराजं दृष्ट्वा चकितः सञ्जीवः– ''प्रभो! एतां कविताम् अहं सभायां वक्तुं शक्नोमि वा?'' इति पृष्टवान्।

तदा रविचन्द्रः सञ्जीवविषये तिरस्कारं प्रकटयन् उक्तवान्– ''एतादृशीं कवितां सभायां वक्तुं यदि अनुमतिं ददामि, तर्हि मम अपि गौरवं नष्टं भवति। भवतः गौरवम् अपि नश्यति। नवनीतः खिन्नः भवति। केनचित् कारणेन भवान् नवनीतविषये पूर्वाग्रहपीडितः अस्ति। नवनीतम् अधिकृत्य अन्यां काञ्चित्



चमत्कारयुक्तां कवितां वदतु'' इति।

सञ्जीवः सविनयम् उक्तवान्– ''प्रभो! सकृत् येन मद्विषये अनादरः प्रकटितः तस्य भवतः पुरतः अहं कवितां वक्तुं न शक्नोमि, न इच्छामि च। भवान् अनुमन्यते चेत् भवन्तम् अधिकृत्य किञ्चन काव्यं लिखित्वा स्वग्रामं गमिष्यामि'' इति।

राजा 'मद्विषये लेखनं मास्तु' इति उक्तवान्। तथापि सञ्जीवः महाराजविषये रविचन्द्रविलासनामकं काव्यं लिखितवान्। अनन्तरं सः महाराजेन दत्तानि उपायनानि स्वीकृत्य स्वग्रामं गतवान्।

वेतालः एवं कथां समाप्य अवदत्– ''हे राजन्! कविः सञ्जीवः महाराजस्य

अनुज्ञानुसारं बहूनां विषये स्वकविताचातुर्येण कविताः लिखितवान्। किन्तु सञ्जीवविषये यदा महाराजेन तिरस्कारः प्रकटीकृतः तदा सञ्जीवः कविताकथनम् एव परित्यक्तवान्। पूर्वं महाराजस्य आस्थानकविः श्वेतकेतुः 'राज्ञः विषये एकं काव्यं लिखतु' इति सञ्जीवं प्रार्थितवान् आसीत्। किन्तु तदा सञ्जीवः न अङ्गीकृतवान् आसीत्। इदानीं स्वयं काव्यं रचितवान् महाराजविषये। किं कारणं स्यात् अत्र? महाराजः कुपितः इति तस्य भयम्, उत धनसम्पादनेच्छा? एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– ''स्वस्मै यथा रोचते तथा कविताः रचयति स्म सञ्जीवः। राजा रविचन्द्रः सञ्जीवम् आस्थानं प्रति आहूय 'सभायां चमत्कारपूर्णाः कविताः वदतु' इति उक्तवान्। राज्ञा दत्तस्य स्वातन्त्र्यस्य दुरुपयोगः न करणीयः इति विचिन्त्य सञ्जीवः सभायाम् उच्यमानाः कविताः पूर्वम् एव महाराजस्य पुरतः वदति स्म। नवनीतः राज्ञः प्राणदाता। तदर्थं तद्विषये अतीव अभिमानः महाराजस्य। नवनीतविषयिणीं कवितां श्रुत्वा महाराजः सञ्जीवं निन्दितवान्। राजा निष्पक्षपाती सहनाशीलः च इति सञ्जीवः चिन्तितवान् आसीत्। किन्तु राज्ञि अपि सामान्याः केचन अवगुणाः सन्ति इति ज्ञात्वा सः खिन्नः। अतः एव सः राजास्थानपरित्यागं कर्तुं निश्चितवान्। राज्ञः उपकारऋणात् मुक्तिः प्राप्तव्या आसीत् खलु तेन? अतः सः राज्ञः विषये काव्यं लिखितवान्। राज्ञा धत्तं धनम् उपायनादिकं च स्वीकृत्य स्वग्रामं गतवान्। सञ्जीवस्य महाराजविषयकं भयं वा धनसम्पादनेच्छा वा नास्ति'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः बेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# चन्दमामानुबन्धः-

## ५९

अस्मद्देशीया पशुपक्षिसम्पत्–

# क्रौञ्चपक्षिणः




उन्नताकारेषु पक्षिषु बकजातीयाः क्रौञ्चपक्षिणः अपि अन्यतमाः। एते सामान्यतः पञ्चपादपरिमितं वर्धन्ते। द्रष्टुम् अतीव मनोहराः भवन्ति। एतेषां शरीराणि भस्मवर्णीयानि। एतेषां कण्ठस्य अधोभागः, पक्षस्य अञ्चलं च श्वेतवर्णीयं भवति। कण्ठस्य ऊर्ध्वभागः शिरः च रक्तवर्णीयम्। एतेषां पादाः दीर्घाः रक्तवर्णीयाः च भवन्ति।

एते पक्षिणः अतीव सामर्थ्यवन्तः, धैर्यवन्तः च। एते मनुष्यान् दृष्ट्वा भीताः न भवन्ति। एते क्षेत्रेषु धान्यं कीटादिकं च खादन्तः मनुष्याणां वसतिसमीपे एव वसन्ति।

क्रौञ्चपक्षिणः सामान्यतः युगलरूपेण एव वासं कुर्वन्ति। यावत् जीवन्ति तावत् परस्परप्रीत्या एव जीवनं यापयन्ति इति प्रतीतिः अस्ति। युगले अकस्मात् पक्षी मृतः चेत् अपरा पक्षिणी अपि दुःखं सोढुम् अशक्ता प्राणत्यागं करोति इत्यपि प्रतीतिः अस्ति। अतः एव अस्माकं देशे नूतनौ वधूवरौ ज्येष्ठाः आशिषा अनुगृह्णन्ति यत्– क्रौञ्चमिथुनम् इव चिरकालं जीवताम् इति।

डयनसमर्थेषु पक्षिषु क्रौञ्चपक्षी एव उन्नतः इति जनाः वदन्ति। एते बृहद्गात्रान् पक्षान् चालयन्तः आकाशे गम्भीरतया उड्डयनं कुर्वन्ति। डयनसमये कदाचित् विचित्रस्वरेण कूजन्ति।

क्रौञ्चपक्षिणः उन्नते प्रदेशे तृणेन गृहं निर्मान्ति। जुलै-डिसेम्बर्-मासयोः मध्यभागः एतेषाम् अण्डानाम् उत्पत्त्यर्थं कालः।

# आधुनिकाः भारतीयचित्रकाराः






# जैमिनिरायः

जैमिनिरायस्य वर्णचित्राणि, प्रथमदर्शनेन एव वयं ततः आकृष्टाः यथा स्याम तथा मनोहराणि भवन्ति। भारतीयां जानपदशैलीम्, आधुनिकपद्धतिं च मिश्रीकृत्य जैमिनिरायेण चित्राणि लिखितानि। विशिष्टया शैल्या चित्राणि लिखन् प्रसिद्धिं प्राप्तवान् जैमिनिरायः।

पश्चिमबङ्गालराज्यस्य बङ्कूरमण्डलस्य बेलितोल्नामके ग्रामे जैमिनिरायः १८८७ तमे वर्षे जन्म

प्राप्तवान्।

बेलितोल्ग्रामीणाः जनाः विविधाः वृत्तीः आश्रित्य जीवनं यापयन्ति स्म। बालकः जैमिनिरायः सर्वदा कुम्भकाराणां कार्यशैली, पाञ्चालिकाकरणक्रमः, चित्रकाराणां चित्रलेखनकार्यम्– इत्यादीन् महत्या श्रद्धया पश्यति स्म। वस्त्राणाम् उपरि विविधैः वर्णैः लिख्यमानं चित्रं पश्यतः तिष्ठतः जैमिनिरायस्य





समयपरिज्ञानम् एव न भवति स्म।

एतत् सर्वं पश्यन् जैमिनिरायः केषुचित् दिनेषु एव स्वयं चित्रलेखनम् आरब्धवान्। चित्रलेखने पुत्रस्य आसक्तिम् अवलोकितवान् पिता पुत्रं कलकत्तानगरे विद्यमानां सर्वकारीयचित्रशालां प्रवेशितवान्।

तस्यां शालायां विदेशीयशैल्या चित्रलेखनपद्धतिं पाठयन्ति स्म। तादृशीं पद्धतिं जैमिनिरायः सुलभतया श्रद्धया आसक्त्या च अधीतवान्। सर्वेपि तस्य नैपुण्येन सन्तुष्टाः जाताः।

जैमिनिरायः स्वकीयाम् एव काञ्चित् विशिष्टां शैलीम् अभ्यस्तुम् इच्छन् तदर्थं विशेषपरिश्रमम् आरब्धवान्। सः जानपदसम्प्रदायपद्धत्या चित्रं लिखन् तदनुगुणम् एव वर्णानाम् उपयोगं कृतवान्। तेषु चित्रेषु नूतना शक्तिः दृश्यते स्म। जैमिनिरायस्य चित्रेण आकृष्टाः सर्वे अपि तस्य चित्रकलानैपुण्यम् अभिजानन्तः प्रशंसां कृतवन्तः।

जैमिनिरायः बहून् युवकलाकारान् भारतीय-चित्रकलासम्प्रदायानुसारं शिक्षितवान्।

एतस्य प्रेरणया बहवः भारतीयचित्रकलापरम्परायाः अनुगुणं चित्रं लेखितुम् उद्युक्ताः अभवन्। एतस्य कारणतः चित्रविमर्शकेषु भारतीयचित्रकला-परम्परायाः विषये आदरः उत्पन्नः अपि।

एषः जैमिनिरायः १९७२ तमे वर्षे एप्रिल्मासे दिवङ्गतः।

# भवन्तः जानन्ति वा?

१. बङ्ग्लादेशस्य उदयः कदा अभवत्?
२. प्राचीनकाले जीलंनद्याः अपरं नाम आसीत्। तत् किम्?
३. द्वितीयमहायुद्धस्य अनन्तरं (१९४५) जर्मनीदेशः पूर्वजर्मनी पश्चिमजर्मनी च इति विभक्तः। कस्मिन् वर्षे पुनः पूर्वपश्चिमजर्मन्योः मेलनं जातम्?
४. 'नलुसरोवर्'नामकः पक्षिणां सङ्ग्रहालयः कस्मिन् राज्ये अस्ति?
५. 'पवित्ररोम्साम्राज्ये पावित्र्यम् अपि नास्ति, साम्राज्यम् अपि नास्ति' इति विचिन्त्य तस्य नाशं कृतवान् प्रपञ्चनायकः कः?
६. अस्माकं देशे 'सिक्किं' कस्मिन् वर्षे २२ तमराज्यत्वेन परिगणितम्?
७. किञ्चन नक्षत्रं सूर्यस्य अपेक्षया अपि चतुर्विंशतिगुणितम् अधिकं प्रकाशवत् अस्ति। तस्य नक्षत्रस्य नाम किम्?
८. अस्माकं संविधानानुगुणं कति अधिकृतभाषाः (राष्ट्रभाषाः) सन्ति?
९. प्राचीनग्रीकक्रीडानाम् आधुनिकानाम् ओलम्पिकक्रीडानां च मध्ये सामान्यतः १५०० सहस्रवर्षाणाम् अन्तरम् अस्ति। ओलम्पिकक्रीडाः ऐदम्प्राथम्येन कदा आरब्धाः?
१०. भारतीयः कश्चित् शास्त्रज्ञः शून्यम् ऐदम्प्राथम्येन संख्यात्वेन उपयुक्तवान्। सः कः?
११. चिकित्साक्षेत्रे बहुधा उपयुज्यमानः वृक्षः कः?
१२. प्रपञ्चे अतीव लघु राज्यं किम्?
१३. पल्लवैः निर्मितः प्रसिद्धः देवालयः कः?
१४. एकस्मिन् देशे १३००० द्वीपाः सन्ति। सः देशः कः?
१५. प्रमुखः अणुशास्त्रज्ञः डा. रामन् विषयान्तरे अपि प्रसिद्धिं प्राप्तवान्। कस्मिन् विषये?

# उत्तराणि

१. १९७१ तमे वर्षे मार्च २१ दिनाङ्के।
२. वितस्ता।
३. १९९० तमे वर्षे अक्टोबर् ३ दिनाङ्के।
४. गुजरातुराज्ये।
५. नेपोलियन् बोन पार्टा (१८०६)।
६. १९७५ तमे वर्षे।
७. सिरियस्।
८. पञ्चदश।
९. १८९६ तमे वर्षे।
१०. ब्रह्मगुप्तः।
११. निम्बवृक्षः।
१२. वॅटिकानुनगरम्।
१३. समुद्रतीरे विद्यमानः महाबलिपुरम्-आलयः।
१४. इण्डोनेषिया।
१५. पियानोविषये।




# रामदासस्य साक्षरता

रामदासनामकः कश्चित् पूर्वम् आसीत्। तस्य पत्नी मङ्गला। पुत्रः शिवः। तस्य ग्रामस्य पार्श्वे एव अरण्यम् आसीत्। रामदासः प्रतिदिनम् अरण्यं गत्वा काष्ठानि सङ्गृह्य आगच्छति स्म। काष्टानां विक्रयणेन प्राप्तेन धनेन जीवनं यापयति स्म च।

बाल्ये अध्ययनं करणीयम् इति रामदासस्य महती इच्छा आसीत्। किन्तु तस्य पिता पुत्रम् अरण्यं नीत्वा काष्टच्छेदनं पाठितवान् आसीत्। एतत् सर्वं स्मरन् रामदासः चिन्तितवान् यत्- मम पुत्रः विद्यावान् भवेत्, सः काष्टविक्रयणं विना अन्यं कमपि उद्योगं कुर्यात् इति।

एकस्मिन् शुभदिने रामदासः पुत्रं शिवं समीपस्थां शालां प्रवेशितवान्। किन्तु शिवः अध्ययनं कर्तुं न इच्छति। अध्ययनविषये तस्य इच्छा एव नास्ति।

एवमेव कानिचन दिनानि अतीतानि। एकस्मिन् दिने रामदासः काष्ठानि सङ्गृह्य गृहं गच्छन् आसीत्। तदा मार्गे शिवस्य अध्यापकः मिलितवान्। अध्यापकः रामदासम् उक्तवान्- "पुत्रः विद्यावान् भवेत् इति विचिन्त्य भवान् महता कष्टेन शिवं शालां प्रवेशितवान्। किन्तु अध्ययनविषये आसक्तिम् एव न दर्शयति भवतः पुत्रः। भवान् शिवं किञ्चित् बोधयतु तावत्" इति।

रामदासः गृहं गत्वा कोपेन पुत्रं पृष्टवान्- "रे शिव! अध्ययने आसक्तिः एव नास्ति भवतः इति भवतः अध्यापकः उक्तवान्। किमर्थं सम्यक् न पठति भवान्?" इति।

तदा शिवः उक्तवान्- "अध्ययने मम इच्छा नास्ति। अहं भवता सह काष्ठविक्रयणकार्यम् एव करोमि" इति।



पुत्रस्य वचनेन कुपितः रामदासः शिवं पृष्ठे सम्यक् ताडितवान्।

तदा शिवः उक्तवान्– "अहं सम्यक् अध्ययनं न करोमि इति भवान् मां ताडितवान्। किन्तु भवान् अक्षराणि अपि न जानाति" इति।

पुत्रस्य वचनेन रामदासस्य स्वाभिमानः जागरितः। खिन्नः सः पत्नीम् उद्दिश्य उक्तवान्– "पश्यतु, मम पुत्रः एव माम् उपहसति। मया अपि बाल्ये अध्येतव्यम् आसीत्" इति।

तदा पत्नी मङ्गला पतिम् उक्तवती– "मया बाल्ये किञ्चित् अधीतम् आसीत्। अहं यावत् जानामि तावत् भवन्तं पाठयिष्यामि। भवान् अभ्यासं करोतु" इति।

तदा रामदासः आश्चर्येण पृष्टवान्– "किम् अध्ययनं नाम तावत् सुलभम्? तदपि अस्मिन् वयसि?" इति।

"वयसः अध्ययनस्य च कोऽपि सम्बन्धः नास्ति। छलेन यत् किमपि साधयितुं शक्यते" इति वदन्ती मङ्गला लेखनफलकम् आनीय कानिचन अक्षराणि लिखितवती। रामदासः तानि अक्षराणि एव पुनः पुनः अनुलिखितवान्।

सप्ताहः अतीतः। अक्षराणाम् अभ्यासे रामदासः महत् कष्टम् अनुभवति। तथापि पत्नी पुनः पुनः प्रोत्साहयति। अनन्तर-सप्ताहतः रामदासः अरण्येऽपि विश्रान्तिसमये अक्षराणाम् अभ्यासं कर्तुम् आरब्धवान्।

एकस्मिन् दिने मध्याह्ने रामदासः लेखनफलकं गृहीत्वा अक्षराणाम् अभ्यासं कुर्वन् आसीत्। तस्मिन् समये मार्गे गच्छन् कश्चन अश्वारूढः रामदासस्य कार्यं दृष्ट्वा चकितः। सः रामदाससमीपं गत्वा पृष्टवान्– "भवान् किमर्थम् अरण्यम् आगतवान्? काष्ठसङ्ग्रहणार्थम् उत अध्ययनं कर्तुम्?" इति।

तदा रामदासः स्वकीयं वृत्तान्तं समग्रं विस्तरेण उक्तवान्। रामदासस्य अध्ययनश्रद्धां दृष्ट्वा सन्तुष्टः सः अश्वारूढः 'प्रयत्ने सफलः भवतु भवान्' इति उक्त्वा रामदासस्य नामादिकं ज्ञात्वा ततः गतवान्।

तद्दिने गृहं गत्वा 'अश्वारूढः कश्चित् मिलितवान् आसीत् अरण्ये' इति वदन् रामदासः प्रवृत्तं सर्वं पत्नीं निवेदितवान्।

चत्वारः मासाः अतीताः। एकस्मिन् सायङ्काले रामदासः यदा गृहम् आगतवान् तदा पत्नी उक्तवती– "भवता पूर्वं कदाचित् उक्तम् आसीत् खलु– अश्वारूढः कश्चित् भवतः अध्ययनं दृष्ट्वा सन्तुष्टः इति? सः अद्य कर्मकरद्वारा भवदर्थं बहूनि पुस्तकानि प्रेषितवान् अस्ति। सः वार्ताम् अपि प्रेषितवान् अस्ति यत्- पुस्तकानां पठनेन ज्ञानम् सम्पादनीयम् इति" इति।

तद्दिनादारभ्य रामदासस्य व्यवहारे महत् परिवर्तनं जातम्। सर्वदा पठति सः। लघुपदानि योजयित्वा पुस्तकानि पठति। पितुः अध्ययनं दृष्ट्वा पुत्रः शिवः अपि श्रद्धया अध्ययनं कर्तुम् आरब्धवान्। तेन शिवः अपि अध्ययने प्रगतिं सम्पादितवान्।

एकदा रामदासः किमपि पुस्तकं पठन् आसीत्। कुत्रचित् सम्यक् न ज्ञातम् इति कारणतः सः संशयं परिहर्तुम् इच्छन् पत्नीं पृष्टवान्। तदा पत्नी मङ्गला उक्तवती– "एतद्विषये अहं न जानामि। यतः इदानीं भवान् एव मम अपेक्षया अधिकम् अधीतवान् अस्ति। यदि संशयः अस्ति, तर्हि पण्डितं विष्णुशर्माणं पृच्छतु" इति।

एकस्मिन् दिने रामदासः अरण्यतः आगमनसमये पिकस्य मधुरगानं श्रुतवान्। पिकस्य ध्वनिना रोमाञ्चितः रामदासः अपि



'कुहू कुहू' इति पिकस्य ध्वनिम् अनुकृतवान्। तदा पिकः उत्तररूपेण पुनः अपि उच्चैः गानम् अकरोत्। एतत् श्रुत्वा रामदासस्य मनसि काचन भावना उदिता। अत्यन्तम् आनन्दम् अनुभूतवान् सः। सः यद्यपि प्रतिदिनम् अपि तत् अरण्यं पश्यति, तथापि तद्दिने किमपि नावीन्यं दृश्यते। हरितानि सस्यानि, विकसितानि पुष्पाणि, पक्षिणां कलरवः, भीत्या पलायमानाः मृगाः– एते सर्वे रामदासे सुप्तरूपेण स्थितं कवित्वम् उत्तेजयन्ति स्म।

तद्दिने रामदासः गृहं गत्वा स्वकीयस्य मनसः भावनाः एकत्र लिखितवान्। अनन्तरदिने रामदासः स्वेन लिखितं नीत्वा



पण्डिताय विष्णुशर्मणे दर्शितवान्।

विष्णुशर्मा रामदासेन लिखितं पद्यं दृष्ट्वा उक्तवान्— "किं भवान् कविः भवितुम् इच्छति? पद्यरचनां कुर्वन् उन्मत्तः इव व्यवहरति चेत् भवतः जीवनस्य का गतिः? भवान् काष्ठविक्रयणं कुर्वन् जीवनं यापयति चेत् वरम् इति मम अभिप्रायः" इति।

विष्णुशर्मणः वचनेन रामदासः अतीव खिन्नः। सः गृहं गत्वा प्रवृत्तं सर्वं पत्नीं निवेदितवान्। तदा मङ्गला उक्तवती— "एतादृशम् उत्तमम् अपि पद्यं विष्णुशर्मा न इष्टवान् इति चेत् सः भवते असूयति इत्यर्थः। इतःपरं तस्य समीपं मा गच्छतु" इति।

मासद्वयानन्तरं राजधानीतः राजभटाः आगत्य तस्मिन् ग्रामे एकं प्रकटनं कृतवन्तः यत्— युगादिपर्वदिने राजधान्यां गीतरचनास्पर्धा आयोजिता अस्ति। ये उत्तमरूपेण गीतं रचयन्ति तेभ्यः पारितोषिकं दीयते इति।

एतत् प्रकटनं श्रुत्वा मङ्गला पतिम् उक्तवती— "भवान् अपि राजधानीं गत्वा भवता रचितं पद्यं वदतु" इति।

"तत्र महान्तः कवयः आगच्छन्ति। तेषां पुरतः अल्पज्ञानिनः मम किं कवित्वम्?" इति उक्तवान् रामदासः।

तदा मङ्गला उक्तवती— "भवान् पारितोषिकं न प्राप्नोति चेत् अपि चिन्ता नास्ति। अन्येषां कवीनां पद्यानि शृणोति चेत् भवतः ज्ञानं वर्धते" इति।

रामदासः पत्न्याः वचनम् अङ्गीकृतवान्। सः युगादिपर्वदिने राजधानीं गत्वा राजभवनं प्राप्तवान्।

तत्र सभायां महाराजः सिंहभूपतिः आगतान् सर्वान् उद्दिश्य उक्तवान्— "सामान्येषु अपि जनेषु केचन कवयः भवन्ति। तेषां निमित्तम् एव एषा स्पर्धा आयोजिता अस्ति। अतः भवन्तः सर्वे निःसङ्कोचं स्वकवितां वक्तुम् अर्हन्ति" इति।

एकैकोऽपि कविः स्वेन लिखितां कविताम् उक्तवान्। रामदासः 'वनमाता'नामिकाम् एकां कवितां पठितवान्। तत्र वनस्य सौन्दर्यं वर्णितम् आसीत्। सरलं मनोज्ञं च आसीत्

तस्य पद्यम्।

निर्णायकाः कार्यक्रमस्य अन्ते स्पर्धायाः फलितांशं प्रकटितवन्तः यत् रामदासः उत्तमरूपेण कवितां रचितवान् इति।

एतत् श्रुत्वा रामदासः अतीव सन्तुष्टः। अनन्तरं महाराजः सिंहभूपतिः रामदासम् अभिनन्द्य पारितोषिकं दत्तवान्। तदा रामदासः महाराजम् उक्तवान्– ''प्रभो, अस्मिन् क्षणे अहं महान्तम् आनन्दम् अनुभवन् अस्मि। किन्तु मनसः कोणे किञ्चित् दुःखम् अपि अस्ति। यतः एकस्मिन् दिने अरण्ये अक्षराभ्यासं कुर्वन्तं मां दृष्ट्वा कश्चित् प्रयाणिकः प्रोत्साहितवान्। सः महापुरुषः कः, कुत्र अस्ति सः इदानीम् इति अहं न जानामि। अस्मिन् सन्तोषसन्दर्भेऽपि अहं तस्मै कृतज्ञतां वक्तुं न शक्नोमि। तदर्थम् खेदोऽपि अस्ति'' इति।

तदा महाराजः मन्दहासपूर्वकम् उक्तवान्– ''सः अश्वारूढः प्रयाणिकः अहम् एव'' इति। अनुक्षणं रामदासः महाराजस्य पादयोः नमस्कारं कृतवान्।

अनन्तरं महाराजः सभासदः उद्दिश्य रामदासं परिचाययन् उक्तवान्– ''पूर्वं कदाचित् अहं वेषान्तरं धृत्वा देशसञ्चारं कुर्वन् आसम्। तदा अरण्ये काष्ठच्छेदनं कुर्वन् एषः रामदासः विश्रान्तिसमये लेखनफलके अक्षराभ्यासं करोति स्म। कश्चित् वयस्कः अपि परिश्रमेण श्रद्धया च अध्ययनं करोति इति ज्ञातवतः मम महान् सन्तोषः जातः। अनन्तरम् अहं राजधानीम् आगत्य कानिचन पुस्तकानि प्रेषितवान्। अनन्तरम् एषः रामदासः कविताम् अपि रचयति इति अहं ज्ञातवान्। वस्तुतः एतस्याः स्पर्धायाः आयोजने कारणीभूतः एषः रामदासः एव। अस्माकं राज्ये अनक्षरज्ञेषु अपि बहवः कवितारचनासमर्थाः स्युः। तादृशाः विद्यावन्तः भवेयुः इति मम अपेक्षा'' इति।

अनन्तरं महाराजः रामदासं विशेषतः सत्कृत्य तस्मै विशालां भूमिं दानरूपेण दत्तवान्।





# विवेकः प्राप्तः

वीरभद्रनामकः कृषकः नूतनतया एकं गृहं क्रीतवान्। सः गृहस्य पृष्टभागे विद्यमानायां वाटिकायां कूपखननं कारणीयम् इति चिन्तितवान्। एतं विषयं ज्ञात्वा प्रतिवेशी केशवः वीरभद्रस्य समीपम् आगत्य उक्तवान्– "भवान् कूपखननं कारयति इति वार्तां श्रुतवान् अहम्। तत् कार्यं मह्यं ददातु। भूमौ जलस्थानं कुत्र इति सुलभतया ज्ञातुं शक्नोमि अहम्" इति।

तदा वीरभद्रः किमपि वक्तुम् उद्युक्तः। तावता तत्रैव पार्श्वे उपविष्टः वीरभद्रस्य प्रतिवेशी रामनाथः उक्तवान्– "वीरभद्र, भवान् नूतनः अस्मिन् ग्रामे। केशवं न जानाति भवान् इति कारणतः अहं वदन् अस्मि। एषः केशवः कूपखननकार्ये नितरां चतुरः। अतः भवान् एतस्मै एव कूपखननदायित्वं ददातु" इति।

रामनाथस्य वचनं श्रुत्वा वीरभद्रः परिहासपूर्वकम् उक्तवान्– "रामनाथवर्य! कदाचित् अस्माकम् आत्मीयानाम् अन्तरङ्गम् एव वयम् अवगन्तुं न शक्नुमः। एवं स्थिते भूमेः अन्तः जलं कुत्र भवति इति कथं ज्ञातुं शक्येत?" इति।

अनन्तरं केशवं पश्यन् वीरभद्रः– "मान्त्रिकाः अञ्जनद्वारा, मायामन्त्रादिकं कृत्वा वा भूमेः अन्तः विद्यमानं जानन्ति स्म पूर्वकाले इति कथादिषु पठितवान् अस्मि अहम्। किन्तु तादृशविषयेषु मम विश्वासः नास्ति। कर्मकरद्वारा अहं कूपखननं कारयिष्यामि" इति उक्तवान्।

तदा केशवः– "अहं मन्त्रतन्त्रादिकं न जानामि। शास्त्रीयपद्धत्या एव अहं जलस्थानं ज्ञास्यामि" इति बहुधा उक्तवान्। किन्तु वीरभद्रः केशवस्य वचनं न अङ्गीकृतवान्।

अनन्तरं केशवः– "भवान् यथा इच्छति तथा करोतु" इति उक्त्वा ततः गतवान्।

अनन्तरदिने एव वीरभद्रः कर्मकरान् आहूय वाटिकायाः एकस्मिन् कोणे कूपखननम् आरब्धवान्। कर्मकराः दशदिनपर्यन्तं खननं कृतवन्तः। महती शिला मध्ये लब्धा इति कारणतः खननकार्यम् मध्ये एव स्थगितम् अभवत्।

कर्मकराः वीरभद्रस्य समीपम् आगत्य उक्तवन्तः– "स्वामिन्! एतस्याः महाशिलायाः भञ्जनं कर्तुं न शक्यते अस्माभिः। महता परिश्रमेण भञ्जनं क्रियते चेत् अपि ततः अधः जलस्य प्राप्तिः अनिश्चिता एव। अतः अस्माकं कार्यस्य धनं ददातु। वयं गमिष्यामः इतः" इति।

एतेन वीरभद्रः अतीव खिन्नः। कर्मकरेभ्यः धनं दत्त्वा प्रतिवेशिनः रामनाथस्य गृहं गत्वा सः प्रवृत्तं सर्वं निवेदितवान्। 'इदानीं किं करणीयम् इति भवान् एव कमपि मार्गं सूचयतु' इति प्रार्थितवान् च।

तदा रामनाथः उक्तवान्– "भवान् आरम्भे एव मम वचने यदि विश्वासं कृतवान् स्यात् तर्हि वृथा व्ययः न अभविष्यत्। इदानीं दुःखं मा करोतु। केशवम् एव आहूय कूपखननं कारयतु" इति।

अनन्यगतिकः वीरभद्रः केशवम् आनायितवान्। केशवः आगत्य वीरभद्रस्य वाटिकां समग्रां परिशीलितवान्।




ईशान्यदिशि कोणे स्थलं दर्शयन् केशवः वीरभद्रम् उक्तवान्– "पश्यतु, कूपखननार्थम् एतत् एव योग्यं स्थलम्। अहं कर्मकरान् आनीय कूपखननं कारयिष्यामि। श्वः एव कार्यस्य आरम्भं करिष्यामि" इति।

अनन्तरदिने केशवः कर्मकरान् आनीतवान्। खननार्थं स्थलं दर्शितवान् च।

कर्मकराः दिनत्रयं यावत् निरन्तरं खननं कृतवन्तः। तदा प्रभूतं जलम् आगतम्। एतत् दृष्ट्वा वीरभद्रः अतीव सन्तुष्टः।

तदा केशवः वीरभद्रम् उक्तवान्– "भवान् पूर्वम् एव यदि कूपखननदायित्वं मह्यं दत्तवान् स्यात्, तर्हि भवतः वृथा व्ययः न अभविष्यत्। मयि भवतः विश्वासः न

आसीत्। भवतु। अत्र मम निरीक्षायाः अपेक्षया अपि जलम् उत्तमरूपेण आगतम् अस्ति। मम कार्यं समाप्तम्। धनं ददाति चेत् अहं इतः गच्छामि" इति।

"धनं कियत् दातव्यम्?" इति पृष्टवान् वीरभद्रः। तदा केशवः "पञ्चशतं रूप्यकाणि ददातु" इति उक्तवान्।

पञ्चशतं रूप्यकाणि दातव्यानि इति श्रुत्वा वीरभद्रः असमाधानेन एव पृष्टवान्– "दिनत्रये एव कार्यं समाप्तम्? तथापि पञ्चशतं रूप्यकाणि वा?" इति।

तदा केशवः शान्तस्वरेण उक्तवान्– "मित्र! मया शास्त्रबलेन जलस्थलं सम्यक् ज्ञात्वा सूचितम्। तदनुगुणं खननतः भवता प्रभूतं जलं प्राप्तम्। शास्त्रज्ञानं कदापि मानवशक्त्या न तोलनीयम्। शास्त्रज्ञानस्य अनाश्रयणतः कियती हानिः इति भवता स्वानुभवात् ज्ञातम् एव। शास्त्रज्ञानस्य अपि मूल्यं भवति एव। मया यथायोग्यं मूल्यम् एव उक्तं, न तु ततोऽप्यधिकम्" इति।

एतत् श्रुत्वा लज्जितः वीरभद्रः मौनं गृहस्य अन्तः गत्वा पञ्चशतं रूप्यकाणि आनीय केशवाय दत्तवान्। केशवः ततः निर्गतवान्।

तस्मिन् समये तत्र आगतः प्रतिवेशी रामनाथः वीरभद्रस्य व्यवहारं दृष्ट्वा उक्तवान्– "मित्र! कार्याणि स्वयं विचिन्त्य करणीयानि, ज्ञानवतां मार्गदर्शनं वा प्राप्तव्यम्, आप्तानां वचने वा विश्वासः करणीयः। भवता प्रथमम् एतेषु त्रिषु एकम् अपि न कृतम्। अतः हानिः अनुभूता। एतदनन्तरम् अपि केशवाय यथोचितं धनं दातुं न सिद्धः भवान्। केशवः सज्जनः। यदि अन्यः स्यात् तर्हि सः द्विगुणितं धनं बलात् स्वीकृतवान् स्यात्" इति।

"आम्, भवता सम्यक् एव उक्तम्। स्वयं चिन्तनं, मार्गदर्शके आदरः, आप्तवचने विश्वासः वा न कृतः। एतादृशव्यवहारस्य फलं कीदृशम् इति ज्ञातम् अपि। इदानीं विवेकः प्राप्तः अस्ति मया" इति हसन् उक्तवान् वीरभद्रः।






**रा**मस्य राज्यपालनसमये उत्तरदिशि गन्धर्वाः प्रजाः पीडयितुम् आरब्धवन्तः। तदा भरतः ससैन्यं तत्र गत्वा घोरं युद्धं कृत्वा तान् गन्धर्वान् पराजितवान्। तेषां पीडातः विमुक्ताः प्रजाः सुखेन आसन्। अनन्तरं वायव्यदिशि लवणासुरनामकः राक्षसः जनान् पीडयितुम् आरब्धवान्। तदा शत्रुघ्नः रामस्य आदेशानुसारं दिव्यास्त्राणि स्वीकृत्य लवणासुरेण सह युद्धार्थं सन्नद्धः। राक्षसस्य मायामन्त्रादिकं सम्मुखीकर्तुं विभीषणः अपि शत्रुघ्नेन सह युद्धार्थं गच्छति चेत् वरम् इति विचिन्त्य रामः लङ्कां प्रति वार्ता प्रेषितवान्– "विभीषण! भवता अनुक्षणम् आगन्तव्यम्" इति।

द्वित्रेषु एव दिनेषु विभीषणः राक्षसवीरैः सह अयोध्याम् आगतवान्। सविभीषणः शत्रुघ्नः राक्षसवीरैः सह लवणासुरस्य संहारार्थं प्रस्थितः।

शत्रुघ्न-लवणासुरयोः मध्ये घोरं युद्धं प्रवृत्तम्। शत्रुघ्नः स्वसामर्थ्येन लवणासुरस्य सैन्यं नाशितवान्। विभीषणादयः राक्षसवीराः अपि महता पराक्रमेण युद्धं कृतवन्तः। शत्रुघ्नः लवणासुरं मारितवान्। विजयिनौ शत्रुघ्नः विभीषणः च सैन्येन सह अयोध्यां प्रत्यागतवन्तौ।

कदाचित् श्रीरामः सभामण्डपे सिंहासने उपविष्टवान् आसीत्। रामस्य वामभागे सीता अपि उपविष्टवती आसीत्। पुरतः हनूमान्,



संहारः करणीयः" इति।

अगस्त्यस्य वचनं श्रुत्वा रामः आश्चर्येण उक्तवान्– "मुनिवर्य! शतकण्ठः कः? तस्य विषये कृपया किञ्चित् विस्तरेण वदतु" इति।

तदा अगस्त्यः उक्तवान्– "कश्यपस्य पत्नी वसुमतीनामिका आसीत्। सूर्यास्तसमये गर्भं धृतवती इति कारणतः सा विकृताकारकं कञ्चित् प्रसूतवती। तस्याः पुत्रः एव शतकण्ठः। शतकण्ठः ब्रह्माणम् उद्दिश्य कठोरं तपः कृतवान्। तस्य तपसा सन्तुष्टः ब्रह्मा उत्तमैः शक्तियुतैः वरैः शतकण्ठम् अनुगृहीतवान्। ब्रह्मणः वरेण प्रभावितः शतकण्ठः 'त्रयः लोका अपि मया जेतव्याः' इति चिन्तयन् अस्ति। भवता सः शतकण्ठः मारणीयः" इति।

रामः किञ्चिदिव चिन्तयन् अगस्त्यं पृष्टवान्– "शतकण्ठस्य स्वरूपं कीदृशम्? तस्य सैन्यबलं कियत्? तस्य सामर्थ्यं कियत्?" इति।

तदा आगस्त्यः– " शतकण्ठः रावणस्य अपेक्षया दशगुणितं प्रतापवान्। तस्य कण्ठध्वनिः भीकरः। अतः एव शतकण्ठः इति तस्य नाम प्रसिद्धं जातम्। भवता कर्तुम् असाध्यम् इति किमपि नास्ति। तस्य संहारः कथम् इति भवान् एव चिन्तयतु" इति उक्त्वा ततः गतवान्।

अगस्त्यस्य गमनानन्तरं रामः अनुजान्

भरतः, लक्ष्मणः, शत्रुघ्नः, सुग्रीवः, अङ्गदः, नलः, नीलः, जाम्बवान्, विभीषणः, वसिष्टः, वामदेवादयः च उपविष्टवन्तः आसन्। तस्मिन् समये महामुनिः अगस्त्यः तत्र आगतवान्। आगतं मुनिं रामः नमस्कृत्य सत्कृत्य च कुशलादिकं पृष्टवान्।

तदा अगस्त्यः उक्तवान्– "दुष्टशिक्षणं शिष्टरक्षणं च कुर्वन् अस्ति भवान्। एवं सति अस्माकं किं कष्टम्? लोककण्टकं रावणं संहृत्य महतीं कीर्तिं सम्पादितवान् अस्ति भवान्। किन्तु इतोऽपि एकं जगत्कण्टकम् अस्ति। तिक्तसमुद्रस्य अपरभागे विद्यमाने मायानगरे शतकण्ठनामकः राक्षसः चिन्तयन् अस्ति यत् भवान् जेतव्यः इति। भवता तस्य

उद्दिश्य– "युद्धे रावणकुम्भकर्णादीन् राक्षसान् मारयित्वा श्रान्तः अस्मि अहम्। लक्ष्मणोऽपि मम साहाय्यं कुर्वन् श्रान्तः। भरतः गन्धर्वैः सह युद्धकरणेन श्रान्तः। शत्रुघ्नस्तु लवणासुरेण सह युद्धं कृत्वा श्रान्तः। इदानीं शतकण्ठस्य मारणार्थं कं नियोजयाम? शतयोजनदूरस्य समुद्रस्य अतिक्रमणम् अपि कष्टकरम् एव" इति वदन् चिन्तामग्नः जातः।

अकस्मात् रामस्य दृष्टिः पुरतः उपविष्टे हनूमति केन्द्रीकृता। अनुक्षणं रामः हनूमन्तम् उक्तवान्– "हे आञ्जनेय! भवता एव एतत् कार्यं साधयितुं शक्यम्। यतः भवान् एकपादरुद्रः" इति।

तदा हनूमान्– "प्रभो! भवतः पराक्रमस्य पुरतः राक्षसानां सामर्थ्यम् अतीव अल्पम्। अतः अलं चिन्तया। मम पृष्ठस्य उपरि स्थित्वा तान् राक्षसान् मारयतु भवान्" इति उक्तवान्।

तदा रामः हनूमन्तम् आलिङ्ग्य– "भवतः पराक्रमः यावत् अस्ति तावत् अन्यस्य कस्यापि नास्ति" इति वदन् हनूमतः प्रशंसां कृतवान्।

रामस्य पार्श्वे उपविष्टा सीता एतत् सर्वं शृण्वती आसीत्। सा रामं पृष्टवती– "हनूमान् एकपादरुद्रः इति उक्तं भवता। रुद्रांशयुक्तः चेत् एषः किमर्थं कपिरूपं धृतवान्?" इति।



तदा रामः उक्तवान्– "पूर्वम् एकपादरुद्रः ब्रह्माण्डं पालयन् आसीत्। महारुद्रगणाः तस्य सेवां कुर्वन्ति स्म। रुद्रः कदाचित् स्वध्यानशक्त्या महाविष्णोः रूपं दृष्टवान्। आत्मनः रक्षणं यः करोति तस्य ईश्वरस्य एव एतत् रूपं स्यात् इति चिन्तितवान् रुद्रः। अनन्तरः सः रुद्रः विश्वस्य पर्यटनं कृत्वा भूलोकं प्रत्यागतवान्। ईश्वरे लीनः जातः च। तस्य ईश्वरस्य अंशतः एषः हनूमान् जन्म प्राप्तवान्" इति।

अनन्तरं रामः शतकण्ठस्य संहारार्थं युद्धार्थं गन्तुं सन्नद्धः। सीता अपि रामेण सह युद्धार्थं गन्तुम् इच्छां प्रकटीकृतवती।



लक्ष्मणः, भरतः, शत्रुघ्नः, सुग्रीवः, विभीषणादयः अन्ये वीराधिवीरादयः चापि रामेण सह प्रस्थिताः।

हनूमान् भूमिः, आकाशः, सर्वाः दिशः च यथा पूर्णाः स्युः तथा विश्वरूपं धृतवान्। भयजनकम् आश्चर्यजनकं च तस्य रूपं दृष्ट्वा सर्वे चकिताः। अनन्तरं हनूमान् अवनम्य स्थितवान्। तस्य पृष्ठस्य उपरि रामः सीतया सह आरूढवान्। रामम् अनुसृत्य राक्षससमूहः वानराः च आरूढवन्तः। अनन्तरं हनूमान् आकाशे उड्डयनं कृतवान्। सर्वे अपि हनूमतः उपरि उपविश्य गगनप्रयाणं कृतवन्तः। आकाशे गच्छन् हनूमान् मेरुपर्वतः इव दृश्यते स्म।

मार्गे गमनसमये रामः सीतायै समुद्रान् दर्शयति स्म। बहुदूरप्रयाणानन्तरं मायानगरं दृष्टम्। तत्र शतकण्ठस्य भवनं परितः सुवर्णस्य प्राकारः आसीत्।

मायानगरस्य लङ्कायां नन्दनवनम् आसीत्। रामः हनूमन्तम् उक्तवान्– "अत्रैव तिष्ठत इति। हनूमान् तत्रैव स्थितवान्। सैन्यम् अवतीर्णम्। रामः सुग्रीवादीन् आज्ञप्तवान् यत्– राक्षसैः सह युद्धार्थं गच्छन्तु इति।

अनुक्षणं सुग्रीवः, अङ्गदः, विभीषणः इत्यादयः महावीराः सैन्येन सह शतकण्ठं प्रति युद्धार्थं प्रस्थिताः। वानरसैन्यं राक्षससैन्यं च दुर्गं परितः विद्यमानां परिखां शिलापातनादिभिः भूमिसमां कृत्वा दुर्गस्य भित्तीः रक्षागोपुराणि च पातितवन्तः। द्वारबन्धान् अपि पातितवन्तः।

वानराणां राक्षसानां च प्रभावं दृष्ट्वा चकिताः शतकण्ठस्य दुर्गरक्षकाः कालकेयादयः– "एतस्य नगरस्य पालकः शतकण्ठः इति एते वानराः न जानन्ति। 'प्राणरक्षणम् अपि कष्टाय भवति' इति यदि एते जानीयुः तर्हि निश्चयेन पलायनं कुर्युः" इति चिन्तयन्तः उच्चैः सिंहगर्जनं कृतवन्तः।

अनन्तरं कालकेयादयः विविधैः आयुधैः वानरसैन्यस्य उपरि आक्रमणं कृतवन्तः। तेषाम् आक्रमणं सोढुम् अशक्तं वानरसैन्यम् इतस्ततः विकीर्णं जातम्। तदा विभीषणः



राक्षससैन्यम् अग्रे युद्धार्थं प्रेषितवान्। राक्षसाः वानराः च मिलित्वा कालकेयादीन् शतकण्ठपक्षीयान् सम्मुखीकृतवन्तः। घोरं युद्धं प्रवृत्तम्।

तस्मिन् समये शिवपूजायां मग्नः शतकण्ठः युद्धस्य कोलाहलं श्रुत्वा द्वारपालकं स्वसमीपम् आहूय पृष्टवान्— "कः कोलाहलः?" इति।

द्वारपालकः शतकण्ठं नमस्कृत्य— "स्वामिन्! कश्चित् राजा वानरस्य उपरि आरुह्य नर-वानर-राक्षससैन्येन सह कुतश्चित् आगतवान् अस्ति। कालकेयादयः तैः सह युद्धं कुर्वन्तः सन्ति। सः एव कोलाहलः" इति।

"देवताः एव मां प्रणमन्ति। एवं स्थिते कश्चित् राजा वानरसैन्येन सह युद्धार्थम् आगतः अस्ति इत्येतत् हास्यास्पदम्" इति वदन् शतकण्ठः मन्त्रिणः अन्यान् सैनिकान् च आहूय उक्तवान्— "युद्धार्थं सन्नद्धाः भवन्तु" इति। ततः सः शिवपूजां मध्ये एव परित्यज्य स्वयं युद्धार्थं प्रस्थितः।

युद्धार्थम् आगतस्य शतकण्ठस्य किरीटं, किरीटस्य अपूर्वां कान्तिं, तस्य गर्वोन्मादं च पश्यन् रामः चकितः।

तदा रामस्य अन्तरङ्गं जानन् हनूमान्— "स्वामिन्! भवान् शतकण्ठस्य दर्शनेन चकितः मौनं स्थितवान्। भवतः पराक्रमस्य एकः अंशः अपि एतस्मिन् राक्षसे नास्ति" इति वदन् महता बलेन शतकण्ठं वक्षःस्थले प्रहृतवान्।

हनूमतः ताडनेन अधः पतितः शतकण्ठः अनुक्षणम् उत्थाय पुरतः स्थितं हनूमन्तं दृष्ट्वा— "रे वानर! कियान् बलवान् अस्ति भवान्? यस्य दर्शनात् एव त्रयः अपि लोकाः भीताः भवन्ति तादृशम् अपि मां मुष्टिताडनेन पातितवान् भवान्। बहुत्र अटित्वा अनेकान् देवान् जित्वा एतादृशं स्थानं प्राप्तवान् अस्मि अहम्। किन्तु मां ताडयितुं कस्यापि धैर्यं न आसीत्। इदानीं मया दीयमानं शूलस्य ताडनं पश्यतु" इति वदन् शूलं हनूमतः उपरि क्षिप्तवान्। अपरक्षणे एव हनूमान् तत् शूलं भञ्जितवान्।

"साधु! साधु!" इति वदन् शतकण्ठः पुनः मुद्गरखड्गादीनि हनूमति प्रयुक्तवान्। किन्तु हनूमान् शतकण्ठस्य आयुधानि सर्वाणि भञ्जितवान्। हनूमतः साहसं दृष्ट्वा सन्तुष्टः रामः धनुः स्वीकृत्य युद्धार्थं सन्नद्धः। विभीषणः अपि रामस्य साहाय्यार्थम् आगतवान्।

शतकण्ठेन सह युद्धम् आरब्धवन्तौ रामः विभीषणः च। रामविभीषणाभ्यां विमुच्यमानान् घोरातिघोरान् अपि बाणान् शतकण्ठः मध्येमार्गम् एव भञ्जयन् तौ द्वौ अपि लङ्कायां पातितवान्।

तदा हनूमान् स्वपुच्छेन सेतुं निर्मितवान्। सेतुद्वारा रामविभीषणौ उपरि आगतवन्तौ। पुनः शतकण्ठेन सह युद्धम् आरब्धवन्तौ। तस्मिन् समये वानराः अपि शिलखण्डान् वृक्षान् च शतकण्ठं लक्ष्यीकृत्य क्षिप्तवन्तः। शतकण्ठः सर्वम् अपि स्वकीयेन अस्त्रप्रभावेण नाशितवान्। शतकण्ठस्य आक्रमणं सोढुम् अशक्ताः अङ्गदः, नलः इत्यादयः महावीराः पलायितवन्तः। रामस्य त्रयः अनुजाः अपि पलायितवन्तः।

तदा ससीतः रामः हनूमतः उपरि उपविश्य युद्धार्थम् आगतवान्। तदा शतकण्ठः रामम् उपहासमिश्रितेन स्वरेण पृष्टवान्– "मया सह युद्धं नाम रावणेन सह यथा युद्धं कृतं तथा इति चिन्तितवान् वा भवान्? वानरस्य उपरि उपविश्य किमर्थम् एतावद्दूरम् आगतवान्



भवान्? सीताम् अपि किमर्थम् आनीतवान्?" इति।

रामः शतकण्ठं प्रति किमपि उत्तरं न दत्तवान्। अपि तु तं लक्ष्यीकृत्य अस्त्राणि प्रयुक्तवान्। तदा रामस्य पुरतः कोटिसङ्ख्याकाः शतकण्ठाः सन्ति वा इति भासते स्म। रामेण प्रयुक्तानि सर्वाणि अपि अस्त्राणि व्यर्थानि जातानि।

एतत् सर्वं दृष्ट्वा हनूमान् अतीव कुपितः। सः प्रचण्डशक्त्या शतकण्ठस्य राक्षससमूहं नाशितवान्। युद्धं कृत्वा श्रान्तः रामः विश्रान्तिम् इच्छन् स्वधनुर्बाणादिकं च सीतायै दत्तवान्। तत् स्वीकृत्य सीता शतकण्ठेन सह युद्धम् आरब्धवती। काचित्

महिला युद्धं कुर्वती अस्ति इति ज्ञात्वा आश्चर्यचकितः अतीव कुपितः च शतकण्ठः महत् सामर्थ्यं दर्शितवान्।

तदा सीता– "रामः यदि सत्यवान् स्यात्, अहं यदि पतिव्रता स्याम्, तर्हि एतेन बाणेन एषः शतकण्ठः मरणं प्राप्नोतु" इति देवं प्रार्थयन्ती बाणं प्रयुक्तवती। तेन बाणेन शतकण्ठः मृतः। तदा सीता धनुर्बाणादिकं रामाय दत्त्वा करौ योजयित्वा विनयेन तं नमस्कृतवती।

सीतायाः कार्येण सन्तुष्टः रामः स्वकीयं रत्नहारं सीतायै दत्तवान्। तदा सीता रामम् उक्तवती– "हनूमान् शतकण्ठस्य राक्षससैन्यं नाशयित्वा शतकण्ठस्य मारणे बहुधा साहाय्यं कृतवान् अस्ति। अतः तस्मै एव ददातु एतं हारम्" इति। अनन्तरं रामः हनूमते तं मणिहारं दत्तवान्।

तेन अतीव सन्तुष्टः हनूमान् मणिहारं स्वकण्ठे धरन् उक्तवान्– "सीतारामाभ्याम् अनुगृहीतः एषः मणिहारः मम वक्षःस्थले एव सर्वदा प्रकाशमानः तिष्ठति। मम हृदये सीतारामौ चिरं स्थापयति च" इति।

अनन्तरं सर्वे अयोध्यां प्रति प्रस्थिताः। विभीषणः रामस्य अनुज्ञां प्राप्य राक्षसगणैः सह लङ्कां गतवान्। सुग्रीवादयः वानराः किष्किन्धां प्रति प्रस्थितवन्तः। हनूमान् रामसमीपे एव स्थितवान्।

शतकण्ठस्य संहारानन्तरं रामः न्याय्येन क्रमेण राज्यभारं निरूढवान्। रामराज्ये शोकः, क्रोधः, लोभः, द्वेषः इत्यादयः सर्वथा लुप्ताः जाताः।

रामस्य सेवां कुर्वन् हनूमान् अयोध्यायां कालं यापयन् आसीत्। केषाञ्चन दिनानाम् अनन्तरं हनूमान् स्वमातरम् अञ्जनादेवीं द्रष्टुम् इष्टवान्।

सः रामस्य समीपं गत्वा स्वस्य इच्छां प्रकटितवान्। रामः सन्तोषेण अनुज्ञां दत्तवान्। रामस्य अनुमतिं प्राप्य गन्धमादनपर्वतसमीपे विद्यमानं अञ्जनादेव्याः आश्रमं प्रति प्रस्थितवान् च।





# अतिथि-सत्कारफलम्

नारदमुनिः पूर्वं कदाचित् भूलोकसञ्चारं समाप्य महाविष्णोः दर्शनार्थं वैकुण्ठं गतवान्।

आगतं नारदं दृष्ट्वा विष्णुः पृष्टवान्– "नारद! भवान् भूलोके सर्वत्र सञ्चारं कृत्वा आगतवान् इति भाति। तत्रत्यः कोऽपि विशेषः अस्ति वा? जनाः सुखेन जीवनं यापयन्तः सन्ति वा? धनिकाः दानधर्मादिकं कुर्वन्तः सन्ति खलु? दरिद्राः निष्ठापराः सन्ति खलु?" इति।

तदा नारदमुनिः मन्दहासपूर्वकम् उक्तवान्– "देव! भवतः प्रश्नस्य उत्तरं दातुं किञ्चित् कष्टम् एव। भवान् एव सकृत् भूलोकसञ्चारं कृत्वा आगच्छति चेत् वरम् इति चिन्तयामि" इति।

विष्णुः नारदस्य वचनम् अङ्गीकृतवान्। अनन्तरं तौ द्वौ अपि प्रयाणिकानां वेषं धृत्वा भूलोकसञ्चारार्थं प्रस्थितौ। विष्णुः नारदः च किञ्चन नगरं गत्वा कस्यचित् भवनस्य समीपं गतवन्तौ। तस्य भवनस्य द्वारं पिहितम् आसीत्। विष्णुः नारदः च द्वारसमीपं गत्वा हस्तताडनेन द्वारशब्दं कृतवन्तौ। किन्तु भवनस्य अन्तर्भागतः कापि प्रतिक्रिया न आगता।

अनन्तरं तौ द्वौ अपि अपरं गृहं गतवन्तौ। तद्गृहस्य द्वारम् उद्घाटितम् एव आसीत्। तौ तस्य गृहस्य पुरतः स्थित्वा पृष्टवन्तौ– "प्रयाणिकौ आवाम् अत्यन्तं बुभुक्षितौ। खादितुं किमपि दीयते वा?" इति।

तदा तद्गृहस्य जनाः मुखे असमाधानं प्रदर्शयन्तः विना सम्भाषणं सशब्दं द्वारपिधानं कृतवन्तः।

जनानाम् एतादृशव्यवहारेण भगवान् विष्णुः अतीव खिन्नः। किन्तु नारदमुनिः मुखं

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



लज्जां न अनुभवतः भवन्तौ? अलं कापट्येन। गच्छताम् इतः'' इति।

अनन्तरं नारदमुनिः विष्णुः च कस्यचित् कुटीरस्य समीपं गतवन्तौ। द्वारे स्थित्वा भिक्षां याचितवन्तौ च।

एतत् श्रुत्वा कश्चन वृद्धः कुटीरतः बहिः आगत्य– ''कृपया आगच्छताम्। भवन्तौ प्रयाणिकौ इव दृश्येते। वयं तु दरिद्राः। तथापि गृहे यत् अस्ति तेन एव भवतोः उपचारं कुर्मः'' इति वदन् तौ अन्तः नीतवान्। कुटीरस्य अन्तः काचित् वृद्धा आसीत्। सा वृद्धस्य पत्नी। सा आगतौ तौ दृष्ट्वा उपवेष्टुं कटम् आनीय प्रसारयन्ती उक्तवती– ''प्रयाणकारणतः भवन्तौ श्रान्तौ इति भासते। किञ्चित्कालम् उपविशताम्। पाकं कृत्वा परिवेषयामि'' इति।

वृद्धः कुटीरस्य अन्तः मृत्पात्रे स्थितम् अल्पपरिमाणकं तण्डुलं पत्न्यै दत्तवान्। अनन्तरं गृहात् बहिः गत्वा लतायां स्थितानि पाकयोग्यानि द्वित्राणि फलानि सङ्गृह्य पत्न्यै दत्तवान्।

अनन्तरम् अतिथ्योः समीपम् आगत्य– ''भोजनार्थं किञ्चित् विलम्बः स्यात्। भवन्तौ तु नितरां श्रान्तौ बुभुक्षितौ च खलु? अतः प्रथमं किञ्चित् क्षीरं पिबताम्। गृहे एकम् उर्वारुकम् अस्ति। तत् कर्तयित्वा ददामि। खादतां तावत्'' इति उक्तवान्।

तदनुगुणम् उर्वारुकं द्विधा विभज्य एकं

परिवृत्य हसति।

अनन्तरं तौ द्वौ अपि अन्यानि कानिचन गृहाणि गत्वा प्रार्थितवन्तौ– ''आवां प्रयाणिकौ। कृपया किमपि आतिथ्यं कुर्वन्तु'' इति।

तदा केचन उक्तवन्तः– ''कार्यं कृत्वा धनं सम्पादनीयम्। तेन जीवननिर्वहणम् उचितम्। भिक्षायाचनं क्रियते चेत् जीवनम् एव व्यर्थम्'' इति।

पुनः केचन उक्तवन्तः– ''भवतोः दर्शनात् एव ज्ञायते यत् भवन्तौ शक्तिशालिनौ इति। कार्यं कर्तुम् अनिच्छन्तौ अलसौ भवन्तौ एवं प्रयाणिकव्याजेन भिक्षायाचनं कुरुतः। एतादृशेन कार्येण किं



भागं विष्णवे, अपरं भागं नारदाय च दत्तवान्। ततः लघुमृत्पात्रे क्षीरं किञ्चित् स्थापयित्वा तयोः कृते दत्तवान्।

तौ वृद्धौ नितरां निर्धनौ चेदपि अतिथिसत्कारविषये विशेषादरवन्तौ एव। तयोः एतं गुणं दृष्ट्वा विष्णुः नितराम् आश्चर्यचकितः।

अनन्तरं विष्णुः वृद्धं पृष्टवान्– "भवतः पुत्राः न सन्ति वा? अस्मिन् वार्धक्येऽपि भवतः साहाय्यार्थं बान्धवाः अपि न सन्ति वा?" इति।

तदा वृद्धः सविषादम् उक्तवान्– "मम अपत्यानि न सन्ति। बान्धवाः अपि न सन्ति। अस्मिन् जगति मदीयः इति कोऽपि नास्ति" इति।

तावता विष्णुः मृत्पात्रे विद्यमानस्य क्षीरस्य अर्धभागं पीतवान्। अपरक्षणे एव तत् क्षीरपात्रं यथापूर्वं पूर्णं जातम्। नारदः उर्वारुकस्य अर्धभागं खादित्वा हस्ते गृहीतवान्। तावता तत् उर्वारुकखण्डम् यथापूर्वं जातम्।

वृद्धः एतत् सर्वं दृष्ट्वा नितरां चकितः। एतौ साक्षात् देवौ महापुरुषौ वा स्याताम् इति चिन्तयन् सः पत्न्याः समीपम् आगत्य– "पश्यतु। अस्माकं कुटीरं प्रति अतिथित्वेन आगतौ सामान्यौ न, महापुरुषौ एव" इति वदन् आत्मना दृष्टं विचित्रं विस्तरेण निवेदितवान्।

पत्युः वचनं श्रुत्वा पत्नी अतीव सन्तुष्टा। सा तयोः समीपम् आगत्य उक्तवती– "भोः! मन्दमतिः अहं भवन्तौ कौ इति ज्ञातुं सर्वथा असमर्था एव। किन्तु भवन्तौ कौचित् महापुरुषौ इति भासेते। भवतोः आगमनेन अस्माकं कुटीरं पावनं जातम् अस्ति। अस्माकम् अज्ञानेन आतिथ्ये यदि लोपः स्यात् तर्हि कृपया क्षाम्यताम्" इति।

तदा विष्णुः मन्दहासपूर्वकम्– "अम्ब! भवतोः आतिथ्येन आवाम् अतीव सन्तुष्टौ। भवतोः अपत्यानि न सन्ति, बान्धवाः च न सन्ति। किञ्चित् धनकनकादिकं वा यदि स्यात् तर्हि भवन्तौ सुखेन जीवितुं शक्नुतः। अतः भवन्तौ आवाभ्यां सह सकृत् कुटीरस्य

बहिः आगच्छताम्" इति वदन् नारदेन सह कुटीरस्य बहिः गतवान्। वृद्धदम्पती अपि तौ अनुसृतवन्तौ। आश्चर्यं नाम कुटीरस्य पुरोभागे बहुदूरं यावत् धनिकानां यानि भवनानि आसन् तानि सर्वाणि अदृश्यानि जातानि आसन्!

एतत् दृष्ट्वा चकितः वृद्धः पृष्टवान्– "महानुभावौ! किमिदं विचित्रम्? अत्रत्यानि भवनानि न दृश्यन्ते खलु? कुत्र गतानि तानि?" इति।

तदा विष्णुः– "तानि भवनानि भूमिसात् जातानि। यः बुभुक्षितेभ्यः दरिद्रेभ्यः च दानं न करोति तस्मै गृहं किमर्थम्? तादृशानां भूमौ स्थितिः किमर्थम्? तादृशाः भूमेः अन्तः एव भवन्तु" इति वदन् "भवतोः इच्छाः काः?" इति पृष्टवान्।

तदा वृद्धः उक्तवान्– "आवां तु वृद्धौ। आवयोः समाना इच्छा यत्– आवयोः मरणं युगपत् एव भवेत् इति। तावत्पर्यन्तं प्रतिदिनं पूजां कर्तुं कश्चन देवालयः यदि अत्र भविष्यति, तर्हि आवां ससन्तोषं जीवनं यापयिष्यावः" इति।

अपरक्षणे एव कुटीरस्य पुरतः कश्चन देवालयः उद्भूतः। वृद्धदम्पत्योः कुटीरस्थाने सुन्दरं भवनम् अपि उद्भूतम्।

अनन्तरं विष्णुः वृद्धदम्पती उद्दिश्य– "भवन्तौ एव वास्तविकौ मानवौ। आमरणं भवन्तौ सुखेन जीवताम्। मरणानन्तरं तस्य देवालयस्य पुरतः महान्तौ छायादातारौ वटवृक्षौ भवेताम्" इति उक्त्वा नारदेन सह अदृश्यः जातः।

अनन्तरकाले तौ दम्पती देवपूजां कुर्वन्तौ दानधर्मादिकं च कुर्वन्तौ बहुकालं जीवितवन्तौ। मरणानन्तरं देवालयस्य पुरतः वटवृक्षरूपेण स्थितवन्तौ च।

जनाः सर्वे तयोः वृद्धदम्पत्योः धर्मनिष्ठां श्रद्धां च ज्ञातवन्तः। तत्र उद्भूतः देवालयः भगवता विष्णुना निर्मितः इत्यपि ज्ञातवन्तः जनाः। तस्मात् दिनात् आरभ्य तत् स्थलं दिव्यं तीर्थक्षेत्रं जातम्।



# रसवार्ताः



## प्राणिसङ्ग्रहालये मानवः

प्राणिसङ्ग्रहालये सामान्यतः विविधाः मृगाः पक्षिणः च भवन्ति। युगोस्लोवियादेशस्य राजधान्यां बेल्ग्रेड्नगरे कश्चन प्राणिसङ्ग्रहालयः अस्ति। तस्य प्राणिसङ्ग्रहालयस्य निर्देशकः निर्णीतवान् यत् प्राणिसङ्ग्रहालये कश्चन मानवः स्थापनीयः इति। इदानीन्तनदिनेषु प्राणिनां कुलं नश्यमानम् अस्ति। नश्यमानकुलेषु मानवकुलम् अपि अन्तर्भवति इति तस्य निर्देशकस्य आशयः। तदर्थं सः पत्रिकायाम् एवं प्रकटनं दत्तवान्– 'प्रातः अष्टवादनतः रात्रौ अष्टवादनपर्यन्तं कार्यं कर्तुं जनाः आवश्यकाः। तैः पञ्जरे उपविश्य पठनम्, दूरदर्शनस्य वीक्षणम् इत्यादीनि गौरवयुतानि कार्याणि करणीयानि भवन्ति' इति। शीघ्रम् एव कानिचन आवेदनपत्राणि आगतानि। प्रथमतया यः आवेदनपत्रं प्रेषितवान् सः कम्प्यूटर्तज्ज्ञः कश्चन निरुद्योगी।




## प्रतिगतौ नवविक्रमः

चन्द्रन्नामकः युवकः कोयम्बत्तूरुनगरस्य नेहरूक्रीडाङ्गणे सूर्योदयतः सूर्यास्तं यावत् प्रतिगमनक्रमेण ८१ कि.मी. दूरं क्रमणं कुर्वन् नवविक्रमं साधितवान् अस्ति। एषः एतस्मिन् द्वादशघण्टात्मके अवधौ क्रीडाङ्गणस्य ७६ वारं परिक्रमणं कृतवान्। यथा कोयम्बत्तूरुनगरे कृतं तथैव देहली, मद्रास्, इत्यादिषु नगरेषु अपि करणीयम् इति चन्द्रन्वर्यस्य इच्छा। 'कराटे'कलायां कृष्णपट्टिकार्हतां प्राप्तवान् चन्द्रन् प्रतिदिनं प्रातः १० की.मी. यावत् धावति। प्रतिसप्ताहं ४ की.मी. प्रतिगमनक्रमेण क्रामति। चन्द्रन्वर्यस्य जन्मस्थलं तु केरलराज्यस्य तिरुच्चूर्। एकपात्राभिनयः, ध्वन्यनुकरणम् इत्यादिषु नैपुण्यम् अस्ति चन्द्रन्वर्यस्य।

## प्रथमं चौर्यम्

विश्वसितुं कष्टम्। किन्तु सत्यम्। पेसिफिक् महासमुद्रस्य मध्ये 'कुक् ऐल्याण्ड्' इति कश्चन द्वीपः अस्ति। तस्मिन् द्वीपे एतावत्पर्यन्तं कदापि चौर्यं न जातम् आसीत् इति आरक्षकाः वदन्ति। किन्तु तत्र गतजुलैमासे कश्चित् 'रारोटाङ्गा'प्रदेशस्य कस्यचित् उपाहारगृहस्य द्वारं भञ्जयित्वा २४,७५० अमेरिकन् डालर्-मूल्यकं धनं चोरितवान्। आरक्षकाः तं गृहीतवन्तः। कुक्ऐल्याण्ड्द्वीपे ऐदम्प्राथम्येन चौर्यं जातम् इति आरक्षाधिकारिणः सूचितवन्तः। आकाशवाणी एतां वार्तां प्रसारयन्ती– 'कुक्ऐल्याण्ड्द्वीपेन अपि अन्यदेशानां समता सम्पादिता' इति उपहासपूर्वकं व्याख्यानम् अकरोत्।

## लिथूनिया

बाल्टिक्देशेषु लिथूनियादेशः अपि अन्यतमः। लिथूनियादेशस्य मन्त्रिमण्डले विद्यमानाः सर्वे अपि मन्त्रिणः निर्णीतवन्तः यत्– धूमपानं न करणीयम् इति। शासकाः नायकाः सदाचारसम्पन्नाः भवन्ति चेत् एव किल प्रजाः अपि तान् अनुसरन्ति!



# चतुरः जामाता

शङ्करपुरनामके ग्रामे भुजङ्गनामकः कश्चित् आसीत्। तस्य पत्नी कान्ता। तयोः पुत्री गौरी। भुजङ्गस्य पत्नी कान्ता विना कारणं धनव्ययं करोति स्म। पतिः यथा न जानीयात् तथा एतादृशव्यवहारं करोति स्म कान्ता।

पुत्री गौरी प्रौढा जाता। गिरीशेन सह गौर्याः विवाहः जातः। कान्ता पुत्रीं पतिगृहं प्रेषयन्ती रहस्येन तां बोधितवती– "गौरि! सर्वान् विषयान् अपि पतिं मा वदतु। यदि वदति तर्हि भवत्याः कार्ये विघ्नं कुर्यात् भवत्याः पतिः। अतः केचन विषयाः पत्युः समीपे कदापि न वक्तव्याः" इति।

अनन्तरं जामातुः गिरीशस्य समीपम् आगत्य उक्तवती– "गिरीश, 'सुगन्धतैलम् आनीय ददातु' इति पतिं वदन्ती एव अस्मि। किन्तु सः न आनीतवान् एव। नगरे बहुविधानि सुगन्धतैलानि लभ्यन्ते इति श्रुतवती अस्मि अहम्। भवान् उत्सवार्थम् आगमनसमये सुगन्धतैलम् आनयतु" इति।

तावता भुजङ्गः तत्र आगतवान् इति कारणतः तयोः सम्भाषणं तत्रैव स्थगितम्। अनन्तरं गौरी पत्या सह नगरं गतवती।

गौरी पतिगृहं गत्वा ऋणं कृत्वा उत्तमाः शाटिकाः, पात्राणि, बहुविधानि अलङ्कारवस्तूनि च क्रीतवती।

गौर्याः व्यवहारं दृष्ट्वा गिरीशः पृष्टवान्– "इदानीम् एतावान् व्ययः किमर्थम्? एतेषां वस्तूनाम् आवश्यकता नास्ति किल!" इति।

"कदा किं क्रेतव्यम् इति भवता उपदेष्टव्यं किमपि नास्ति। मम मात्रा सर्वं बोधितम् अस्ति। मातुः वचनं वेदवाक्यं मम। भवान् तूष्णीं तिष्ठतु तावत्" इति उक्तवती गौरी। गिरीशः मौनम् आश्रितवान्।

कानिचन दिनानि अतीतानि। दीपावल्युत्सवः आगतः। तदा पत्नी गौरी गिरीशम् उक्तवती– "श्वः एव मातृगृहं गच्छाव आवाम्। मात्रा उक्तं सुगन्धतैलम् आनयतु अद्य सायङ्काले" इति। गिरीशः 'अस्तु' इति अङ्गीकृतवान्।

तस्मिन् सायङ्काले यथासमयं गिरीशः गृहं न आगतवान्। रात्रिः जाता। तथापि गिरीशः न आगतः। गौरी चिन्तया पत्युः आगमनम् एव निरीक्षमाणा उपविष्टवती। मध्यरात्रसमये गिरीशः पानमत्तः इव इतस्ततः वलन् गृहम् आगतवान्।

पत्युः व्यवहारात् भीता गौरी– "किमर्थम् एवम् अस्ति भवान्?" इति पतिं पृष्टवती।

तदा गिरीशः उच्चैः निःश्वासं कुर्वन् उक्तवान्– "गौरि! किमिति वदामि? भवत्याः मातुः निमित्तं सुगन्धतैलस्य अन्वेषणार्थं गतवान्। तेन एव सर्वनाशः जातः। बहुधा अन्वेषणस्य अनन्तरं कुत्रचित् सुगन्धतैलानां कूपीः भूमौ संस्थाप्य उपविष्टवान् कश्चित् मया दृष्टः। तं दृष्ट्वा अपि सः चोरः इति न ज्ञातवान् अहम्। 'एतत् एव भवता उक्तं सुगन्धतैलम्, स्वीकरोतु' इति वदन् सः तैलं आघ्रापितवान्। अनन्तरं किं प्रवृत्तम् इति अहं न जानामि। यदा अहं प्रबुद्धः तावता सः पलायितवान् आसीत्" इति।

तदा गौरी सातङ्कं पृष्टवती– "तर्हि



इदानीं कुत्र लभ्यते तादृशसुगन्धतैलम्?" इति।

पत्न्याः वचनेन कुपितः गिरीशः उक्तवान्– "सुगन्धतैलस्य विषयं त्यजतु तावत्। अद्य सायङ्काले अहं कार्यालयतः मम वेतनधनं सहस्रं रूप्यकाणि स्वीकृतवान् आसम्। सुगन्धतैलस्य अन्वेषणकारणतः एव मम धनं नष्टं जातम्। अतः मातुः सकाशात् सहस्रं रूप्यकाणि मह्यं दापयतु। नो चेत् इतः परं भवती मातृगृहे एव तिष्ठतु" इति।

पत्युः उग्रं कोपं ऐदम्प्राथम्येन दृष्ट्वा गौरी भीता। अनन्तरदिने तौ द्वौ अपि गौर्याः मातृगृहं गतवन्तौ।

गौरी मातरं गृहस्य पृष्ठतः विद्यमानां



वाटिकां नीत्वा– "भवत्याः सुगन्धतैलस्य कारणतः अहं कष्टम् अनुभवन्ती अस्मि" इति वदन्ती प्रवृत्तं सर्वं निवेद्य उक्तवती– "भवती सहस्रं रूप्यकाणि ददाति चेत् एव अहं पतिगृहं गन्तुं शक्नोमि" इति।

तदा माता कान्ता पृष्टवती– "कश्चित् चोरः भवतां धनं चोरितवान् चेत् मया किमर्थं धनं दातव्यम्?" इति।

मातुः वचनेन कुपिता गौरी उक्तवती– "मम पतिः भवत्याः निमित्तं सुगन्धतैलस्य क्रयणार्थं गतवान्। तदर्थम् एव एतत् सर्वं प्रवृत्तम्। यदि भवती साहाय्यं न करोति तर्हि दण्डनं मया अनुभोक्तव्यम्" इति।

"मम समीपे एकं नाणकम् अपि नास्ति। भवत्याः पिता एतत् जानाति चेत् माम् एव मारयेत्" इति उक्तवती माता।

तदा गौरी– "पिता यथा न जानाति तथा बहूनि कार्याणि निर्वहति किल भवती! तथैव एतद्विषये अपि करोतु भवती" इति।

'एतत् सर्वं मम ललाटलिखितम्' इति उक्त्वा माता कान्ता किञ्चित् विचिन्त्य पुत्रीम् उक्तवती– "इदानीं कथञ्चित् भवत्या आत्मरक्षणं करणीयम्। तदर्थम् एकम् उपायं कुर्मः। भवत्याः पिता धनपेटिकायाः कुञ्चिकां सर्वदा स्वसमीपे स्थापयति। धनपेटिकायाः उपरि एका भारयुक्ता महती पेटिका अस्ति। रात्रौ भवत्याः पिता यदा निद्रामग्नः भवति तदा अहं धनपेटिकायाः कुञ्चिकाम् उपायेन स्वीकृत्य भवत्याः पत्ये ददामि। सः विना शब्दं भारयुक्तां महतीं पेटिकाम् अधः अवतार्य धनपेटिकाम् उद्घाट्य सहस्रं रूप्यकाणि स्वीकरोतु" इति।

गौरी एतं विषयं पतिं निवेदितवती। तदा गिरीशः उक्तवान्– "चौर्यं कर्तुं सर्वथा न इच्छामि अहम्" इति।

तदा कान्ता उक्तवती– "गिरीश! एतत् चौर्यम् इति मा चिन्तयतु भवान्। भवतः यत् धनं नष्टं तावदेव भवान् स्वीकरोतु" इति।

तदा गिरीशः 'अस्तु' इति श्वश्र्वाः वचनम् अङ्गीकृतवान्।

तस्यां रात्रौ कान्तायाः उपायः विना विघ्नं

सफलः जातः। अनन्तरदिने एव उत्सवः। उत्सवदिने प्रातः आभरणानि धर्तुम् इच्छन्ती कान्ता पतिम् उक्तवती– "पेटिकाम् उद्घाट्य आभरणानि ददातु" इति।

भुजङ्गः धनपेटिकाम् उद्घाटितवान्। पेटिकायाम् एकम् अपि आभरणं न आसीत्। एतत् दृष्ट्वा कान्ता उच्चैः रोदनं कर्तुम् आरब्धवती।

तदा भुजङ्गः आश्चर्येण पत्नीं पृष्टवान्– "धनपेटिका तु यथापूर्वं कीलिता एव अस्ति। एवं तर्हि आभरणानि कुत्र गतानि?" इति।

तदा कान्ता– "जामाता गिरीशः एव एतादृशं कार्यं कृतवान्" इति कोपेन वदन्ती गिरीशस्य प्रकोष्ठं गत्वा तम् उक्तवती– "रे चौर्यकरणं किं शोभते? उत्तमकुले प्रवृद्धाः एतादृशम् अकार्यं न कुर्वन्ति। श्वश्र्वाः आभरणानां चौर्यं कृतं चेत् गोहत्या कृता इव। हुँ, मदीयानि सर्वाणि आभरणानि आनीय मम पुरतः स्थापयतु। नो चेत् अहं प्राणत्यागं करोमि" इति।

गिरीशः किमपि अजानन् इव– "उत्सवव्याजेन जामातरं गृहम् आहूय चौर्यस्य आरोपः क्रियते वा? एतत् महत् अपमानकरं मम। क्षणम् अपि अत्र स्थातुं न इच्छामि अहम्" इति कोपेन उक्तवान्।

गिरीशस्य वचनं श्रुत्वा कान्ता कोपेन उक्तवती– "प्रथमं मम आभरणानि प्रत्यर्पयतु। अनन्तरं गच्छतु भवान्। पेटिकाम् उद्घाट्य सहस्रं रूप्यकाणि केवलं स्वीकरोतु इति मया उक्तम्। किन्तु भवान् सर्वाणि



आभरणानि अपि अपहृतवान्'' इति।

तदा मुग्धभावेन गिरीशः उक्तवान्– ''पेटिकाम् उद्घाट्य सहस्रं रूप्यकाणि स्वीकरोतु इति भवती कदा उक्तवती? एतत् सर्वं कल्पयित्वा वदन्ती अस्ति भवती'' इति।

तस्मिन् समये भुजङ्गः तत्र आगत्य– ''कान्ते! विवेकेन व्यवहरतु भवती। अस्माकं जामाता किमर्थं चौर्यं करोति?'' इति पृष्टवान्।

तदा कान्ता पत्युः भुजङ्गस्य पादयोः पतित्वा 'मां क्षाम्यतु कृपया' इति वदन्ती प्रवृत्तं सर्वं निवेदितवती।

भुजङ्गः पत्नीं सान्त्वयन् उक्तवान्– ''भवत्याः आभरणानि न नष्टानि। नगरतः सुगन्धतैलम् आनीय ददातु इति पूर्वं यदा भवती गिरीशम् उक्तवती तदा पार्श्वप्रकोष्ठे एव आसम्। पतिः यथा न जानाति तथा बहून् व्यवहारान् करोति चेत् कीदृशाः अनर्थाः भवन्ति इति भवतीं विवेकं बोधयितुम् अहं गिरीशः च एतत् नाटकं कृतवन्तौ। पुत्री गौरी अपि एतस्मात् विवेकं प्राप्नोतु इत्यपि मम गिरीशस्य च आशयः आसीत्। एतस्य नाटकस्य सूत्रधारः गिरीशः एव'' इति।

एतत् सर्वं श्रुत्वा गौरी अतीव लज्जिता। ''बहूनां वर्षाणाम् अनन्तरम् अद्य अहं मम दोषं सम्यक् ज्ञातवती। तदस्तु, मम तु प्रश्नः यत् लघुविषये एतादृशस्य नाटकस्य आवश्यकता आसीत् वा? इति'' इति पतिं पृष्टवती कान्ता।

भुजङ्गस्तु उत्तररूपेण केवलं मन्दहासं प्रकटितवान्, तावदेव। गिरीशः युतकस्य कोषतः एकां लघुकूपीं निष्कासयन्– ''अम्ब! भवत्या पृष्टं सुगन्धतैलम् एतदेव। स्वीकरोतु'' इति उक्तवान्।

तदा कान्ता उक्तवती– ''गिरीश! तत् तैलं गौर्यै ददातु। अहं यदि स्वीकरोमि तर्हि 'इतोऽपि विवेकः न प्राप्तः मम पत्न्याः' इति चिन्तयित्वा भवतः श्वशुरः पुनरपि एकं नाटकं कुर्यात्'' इति।

कान्तायाः वचनं श्रुत्वा सर्वे हसितवन्तः।



# प्रकृतिवैचित्र्याणि–



## मत्स्यग्रहणार्थं स्यूतः

पेलिकान्पक्षिणः बकाकारकाः। तेषां मुखम् अतीव विशालम्। एतेषां पक्षिणां नासिकायाः अधोभागे कश्चन स्यूतः भवति। मत्स्यग्रहणार्थम् एतस्य स्यूतस्य उपयोगः। एतेषां पक्षिणां प्रधानः आहारः मत्स्यः। अतः एते पक्षिणः उपायेन मत्स्यान् गृह्णन्ति। एते समूहरूपेण जले तरणं कुर्वन्तः लघुमत्स्यान् परितः तिष्ठन्तः तान् यत्र जलम् अधिकं नास्ति तत्र नयन्ति। अनन्तरं झटिति नासिकां जले निमज्ज्य स्यूतेन मत्स्यान् गृह्णन्ति। अमेरिकादेशस्य उत्तरभागे कृष्णमिश्रितेन रक्तवर्णेन युक्ताः पेलिकान् पक्षिणः भवन्ति। एते जलस्य उपरि उड्डयनं कुर्वन्तः मीटर्द्वयपरिमिते गभीरे जले विद्यमानान् अपि मत्स्यान् झटिति ग्रहीतुं समर्थाः सन्ति।

## महान्तः तिमिङ्गिलाः

नीलवर्णीयः तिमिङ्गिलः सर्वेषां तिमिङ्गिलानाम् अपेक्षया बृहदाकारकः। एतस्य मुखम् अपि विशालम्। प्राणिषु एव बृहदाकारकः एषः जलप्राणी क्रील्नामकान् लघुमत्स्यान् खादन् जीवति। तिमिङ्गिलाः सर्वदा मुखं व्यादाय तरणं कुर्वन्ति। अतः समूहरूपेण गच्छन्तः क्रिल्मत्स्याः सुलभतया तिमिङ्गिलानां मुखं प्रविशन्ति। अनन्तरं तिमिङ्गिलः जिह्वासाहाय्येन मुखे विद्यमानं जलं बहिः पातयित्वा मत्स्यान् सावधानं गिलति।



## गिब्बन् ध्वनिः

उराङ्गुटान्, चिम्पान्जी, गेरिल्ला, गिब्बन्– एते प्राणिनः वानरजातिषु अन्तर्भवन्ति। एते सर्वे अपि पादद्वयेन चलन्ति। गिब्बन् केवलः मानवः इव उरः विशालीकृत्य स्थातुं शक्नोति। अन्ये किञ्चित् अवनमय्य चतुर्भिः पादैः चलन्ति। सियामङ्ग् गिब्बन्-प्राणिनः कण्ठध्वनिः महान्। स्यूतः इव विद्यमानः एतस्य कण्ठभागः ध्वन्युत्पादने महते प्रयोजनाय भवति। उच्चैः ध्वनिकरणसमये कण्ठभागस्य स्यूतः वायुना पूर्णः भवति। तदा 'बूम् बूम्' इति कश्चन शब्दः श्रूयते।



Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकां जनवरी-९४ मासे प्रकटयिष्यामः।



M. Natarajan



Phal Singh Girota

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा नवम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

## 'सप्टम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **निलीनोऽस्मि निलीनोऽस्मि लभ्ये केनाऽपि नाहम्।**

द्वितीयचित्रम् - **दुष्टस्त्वं खलु लब्धोऽसि मुञ्चे कदापि नाहम्।**

प्रेषिका - लीलावती, विद्वन्मध्यमा-I, श्री-ज.चा.सं. महापाठशाला, बेङ्गलूरु-१८




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**


---